यत्र भाति खलु भारतभागे
कान्तशुक्लरचिता कृतिका वा ।
स्पष्टसर्वसुखदायकरूपं
किन्नु नो फलितमत्र कवीनाम् ।।१२।।

भाति तेऽपि लिखितं यदि लोके
नूतनेह किल संस्कृतिरेव ।
कालिदास-कविवृन्द-सुजन्या-
मेलनाद्रचितकाव्यकलासु ।।१३।।

## रमाकान्तः शान्तः परमविदुरः सन् विजयताम्

सुधीः सौम्यः सभ्यः सरलसुमनाः साधुसरणिः
गुणी गण्यो मान्यो बुधकविवरेण्यः प्रमुदितः ।
सदा शुक्लः शुद्धः सुजनशिवकारी शुचितमः
रमाकान्तः शान्तः परमविदुरः सन् विजयताम् ।।१।।

महाकायो भीमस्तदपि मधुरः सन् मृदुतमः
विचित्रोऽयं व्यक्तिः खलु विरचितः पूर्णविधिना ।
समेषामेषोऽहो ! निजपरिजनो भाति सुतराम्
रमाकान्तः शान्तः परमविदुरः सन् विजयताम् ।।२।।

## रमाकान्तशुक्लः स धन्यः कवीशः

सदो मञ्चशूरो मयूरो ध्वनौ च
दिगन्तेषु विख्यातकीर्तिर्बुधेषु ।
स साकारमासेवते दत्तचित्तः
सदा संस्कृतं संस्कृतिं लेखनेन ।।१।।

तदीयं स्वरूपं मनोज्ञं बलिष्ठं
प्रभामण्डलेनापि नित्यं विभाति ।
न रूपं कदाचिद् विकारो विकुर्यात्
तदुक्तिस्वरूपो रमाकान्तशुक्लः ।।२।।

अहम्मत्सरस्वार्थबुद्धेरपेतः
प्रपञ्चोपपन्नो न वाडम्बरी सः ।
प्रकृत्या मृदुः शीलशान्तस्वभावो
गताज्ञानबुद्धिः शरण्यो वरेण्यः ।।३।।

यदा दूरदृष्टौ नभोवाचि तस्य
प्रपश्यामि चित्रं शृणोमि प्रवाचम् ।
पठन्तं वदन्तं स्वकाव्यं तदामुम्
प्रसीदामि हृष्यामि नृत्यामि चाहम् ।।४।।

सदाचारसत्कर्मसंसक्तचेताः
प्रशान्तप्रचेता मनस्वी तपस्वी ।
नवीनां कृतीनां प्रकाशप्रणेता
रमाकान्तशुक्लः स धन्यः कवीशः ।।५।।

दि0 १०-११.१९९०

# संस्कृतकविवर!

डॉ० रामकिशोर मिश्रः

संस्कृतकविवर हे रमाकान्त !
हे रमारमण[१] बुधवर विद्वन् !
ब्रह्मानन्दात्मज[२] संस्कृतबुध !
कुर्वेऽभिनन्दनं तव नन्दन् ॥१॥

हे संस्कृतपरिषन्महासचिव[३] !
तव वल्लभभारतजनताऽहम्[४] ।
पञ्चाशे तव वर्षे पूर्णे,
विदधामि स्वागतं सोत्साहम् ॥२॥

हे विप्रशुक्लवंशावतंस !
भाति मे भारतं तव जनुषा ।
संस्कृताऽऽलोकिनी[५] प्रतिभा ते,
सेत्थं प्रकाश्यते तव वपुषा ॥३॥

स्वागतं पयोद[६] ! अकालजलद[७] !
जय भारतभूमे[८] ! तव रचनाः ।
जाबालिपुरं चल[९], उज्जयिनी[१०],
तास्ताः प्रपठ्य हृष्यन्ति जनाः ॥४॥

---

(१) रमा नाम कविपत्नी (२) श्री ब्रह्मानन्दः कविपिता । (३) देववाणी-परिषदिति ज्ञेयम् । अत्र कवेरर्थः श्रीरमाकान्तशुक्लः ।

हे संस्कृतनाटककार कवे !
पण्डितराजीयम्[११] अभिशापम्[१२] ।
तव नाटकपुरश्चरणकमलम्[१३],
स्थापयति परस्परमालापम् ।।५।।

हे दाराशिकोहीय[१४] कविवर !
कविचक्रव्यूहभङ्ग[१५] कर्तः !
स्वागत-स्वतंत्रतां[१६] भणामि ते,
स्वीकुरु प्रार्थनां रमाभर्तः ! ।।६।।

अर्वाचीनसंस्कृतसम्पादक[१७] !
करोषि विबुधचक्रानुसरणम्[१८] ।
केचन नूतनसंस्कृतकवयो
विदधति काव्ये तवानुकरणम् ।। ७।।

'एकं सद्[१९] बहुधा विलोक्यते
भारतं' समृद्धं त्वया कृतम् ।
इह राष्ट्रदेवते[२०] ! स्वरेण ते
कविताभिर्जनतामनो हृतम् ।।८।।

भारते प्रदेश-शासनैस्ते
काश्चन पुरस्कृतास्तव रचनाः ।
या दृष्ट्वा तव काव्य-प्रतिभां
प्रशंसन्ति हि संस्कृतज्ञजनाः ।।९।।

रविषेणरचितरचनाशोधक !
हे रमाकान्त संस्कृत-विद्वन् !
वर्षाणि शतं त्वं जीव कवे !
कुर्वेऽभिनन्दनं तव नन्दन् ।।१०।।

भवद्ग्रन्थैर्भवेच्छर्म,
प्रसन्ना वयमद्य कुर्मः ।
संस्कृते ह्यभिनन्दनं ते,
अये कविवर ! स्वागतं ते ।।११।।

त्वं महाकविरसि नमस्ते,
नाऽद्य कोऽपि कविः समस्ते ।
तेन कुर्मो वन्दनं ते,
अये कविवर ! स्वागतं ते ।।१२।।

शुभदिनं नश्चिरादेतम्,
भवत उन्नतिमधूपेतम् ।
अद्य संस्कृतगिरावृद्धिः
भवति काव्यैर्नः समृद्धिः ।।१३।।

स्वागतं कवयन्ति कवयः,
गायका गायन्तिं सदय !
संस्कृते ह्यभिनन्दनं ते,
अये कविवर ! स्वागतं ते ।।१४।।

---

४- तः २०- पर्यन्तं कवेः श्रीरमाकान्तस्य संस्कृतरचनाः प्रदर्शिताः सन्ति । ९७- 'अर्वाचीनसंस्कृतम्' डॉ0 श्री रमाकान्तशुक्लेन सम्पादितं त्रैमासिकं संस्कृतपत्रम्।

# जयति भुवि सदा श्रीरमाकान्त-शुक्लः !!

डॉ0 मुरलीमनोहर पाठकः

शुक्लोपाह्वो विशालो यः, पतिश्चापि श्रियस्तु यः ।
शास्त्राणां च सुविज्ञाता, कान्तो विजयतेतराम् ।। १ ।।
आचार्यस्सांख्यशास्त्रस्य, योगशास्त्रस्य चापि यः ।
साहित्यस्य तथैवास्ति, काव्यकारो बृहद्यशाः ।। २ ।।
देववाणीति नाम्नी या, सभा ख्यातास्ति भूतले ।
साऽपि पल्लविताऽनेन, पुष्पिता च विराजते ।। ३ ।।
कान्तो यश्श्रीरमाया बहुजनविदितः शुभ्रचेता मनीषी
ज्ञाने योऽसौ धुरीणः बहुविधसुकलाशास्त्रजुष्टः प्रवीणः ।
सांख्ये योगे च तत्त्वे सरसकविकृतौ गौरवं यश्च धत्ते ।
विद्वन्मान्यो वदान्यो जयति भुवि सदा श्रीरमाकान्तशुक्लः ।। ४ ।।

वैदुष्यपूर्णाऽऽकृतिरस्ति यस्य,
काव्यप्रमाणेऽस्ति कलाऽभिरामा ।
स राजते भारतभूमिभक्तो
ऽभिनन्दनेनास्य वयं च धन्याः ।।

# त्वय्येव सम्भाव्यते!

डॉ० हर्षदेव माधवः

राजनीतिप्रदूषणविक्लवे नगरे
प्रफुल्लकाव्यपल्लवं पद्मं प्ररोहेत् ।
मशीनगन-बाम्बदुर्घटनाग्रस्ते स्थले
हार्दे सहस्रधारारमणीयता विकसेत् ।
नेत्रयोः काश्मीरोद्यानपाटलपुष्पसौकुमार्यं विलसेत् ।
ओष्ठयोः
शब्दवेलानादो भारतगाथां गर्जेत् ।
वक्षःस्थले
ताजमहलसदृशं मैत्री-स्थापत्यं स्यात् ।
पादयोर्जाबालिपुरस्य नर्मदायाश्चाञ्चल्यं भवेत् ।
कण्ठशिखरे
धीरगंभीरस्वरमया जलदास्तरेयुः ।
मनसि
मानवताया उत्तुङ्गगोपुरयुक्ता देवालयाः स्युः ।
वाण्यां
सरस्वत्या मयूरस्य केका प्रवहेत् ।
लेखन्यां
उज्जयिन्या महाकवेरमृतबिन्दुवर्षा भवेयुः ।
हे सुकवे !
सर्वमेतत् त्वय्येव संभाव्यते
त्वय्येव !!

# शृङ्गारः संस्कृतस्य

डॉ0 कैलाशनाथ द्विवेदी

भास्वरं भारतं सर्वं ज्ञानालोकेन भूतले ।
ज्ञानरश्मिमयी भव्या सेव्या संस्कृतभारती ।।

संस्कृतस्य सुसेवायां संलग्नः सेवक : सुधी ।
श्रीरमाकान्तशुक्लोऽयं संस्तुत्यः सादरेण वै ।।

नैकमान्यपुरस्कारैर्नानाविरुदभूषितः ।
डॉ0 शुक्लस्य सुविख्याता 'भाति मे भारतं' कृतिः ।।

स्वनीरक्षीरमत्यैव हंस इव सुशोभितः ।
दत्वा 'ऽर्वाचीनसंस्कृतं' सत्यमेव यशोधरः ।।

प्राच्यविद्याप्रवीणोऽयं नैकशास्त्रविशारदः ।
श्रेष्ठः कविस्तु मेधावी, शृङ्गारः संस्कृतस्य च ।।

अभिनन्द्यस्त्वनिन्द्योऽस्ति संस्कृताराधकः सदा ।
सुकीर्तिमतुलां लब्ध्वाऽमृतोऽजरो भवेद्भुवि ।।

सुधीः सम्पादकः साधुः संस्कृताराधने रतः ।
वर्षे पञ्चाशति श्रीमान् सादरमभिनन्द्यते ।।

नैकग्रन्थनिधिं नीत्वा नव्ये नीराजनेऽजिरे ।
साहित्यसर्जने मग्नः, जीवेत्सः शरदः शतम् ।।

लाभान्वितो भवेल्लोकः सुविचारेण सर्वदा ।
सच्चिन्तकः कृती धीमान् जीवेच्च शरदः शतम् ।।
अस्याभिनन्दनेनैव ग्रन्थोऽयं सफलो भवेत् ।
कीर्तिरक्षासुकार्येण शाश्वती संस्कृतिरिह ।।

।। इति शम् ।।

# वन्दनसप्तकम्

श्री पी. टी. जी. वी. रङ्गाचार्युलु

अयि भो महाशयाः, जयतु संस्कृतम् ।

''सख्यं साप्तपदीयम्'' इति महाकविकालिदासस्य वचनम् । तद-नुसारेण अहं वन्दनसप्तंकं समर्प्य महानुभावेन श्रीरमाकान्तशुक्ल-महोदयेन स्नेहं विवर्धितुमिच्छामि ।

विद्याविनयसंपन्नो स्नेहभावप्रपूरितः ।
श्रीरमाकान्तशुक्लो मे सन्निधत्तां सदा हृदि ।। १ ।।

संस्कृतस्य कृते जीवन् संस्कृतस्य कृते यजन् ।
आत्मानम् आहुतिं कर्तुं रमाकान्तो सुनिश्चितः ।। २ ।।

संस्कृतस्य प्रचारार्थं नूत्नमार्गस्सुकल्पितः ।
मादृशानां च छात्राणाम् आदर्शोऽभूत् गुणोत्तमः ।। ३ ।।

''पुराणे पद्मपूर्वे'' च तथा ''तुलसिमानसे'' ।
निबद्धं शोधपत्रं च सर्वकारेण श्लाघितम् ।। ४ ।।

''भाति मे भारतं'' चैव ''राष्ट्रदैवत'' नामकम् ।
''जय भारतभूमे'' च राष्ट्रगीतान्यकारि वै ।। ५ ।।

''देववाणी'' प्रसारार्थं 'संस्था' 'देहलि' पट्टणे ।
मित्राणां सहकारेण चालयत्येष वै जनः ॥ ६ ॥

अतिथ्यभ्यागतादीनां सत्कारः क्रियते सदा ।
वन्देऽहं श्रीरमाकान्तशुक्लं तं गुणपूजितम् ॥७ ॥

इत्थं

पालकोण्डा सहृदयहृदयविधेयः

२४-१०-९० पा0 ति0 गु0 वें0 रङ्गाचार्यः

# भाति मानसे

महाव्रतयाजी शंकर शर्मा

श्रीनिवास-रमाकांत-रामकारिभिरावृता ।
शुक्लवर्णतरंगानां कांतिर्मे भाति मानसे ।।
सकृत्संपर्कसंजाता सतां कांतिश्चिरायते ।
रमाकांतस्य संपर्को भासते शाश्वतं तथा ।।
रमाकांतमुखांभोजनिर्गता वैखरी शुभा ।
करोति रससंपुष्टिं सुमनःक्लेशहारिणीम् ।।

भाति भारतमिदं बहुशाखैः
पुष्पितैश्च कुसुमैः परिफुल्लैः।
शुक्लकोकिलरुतैः परिपुष्टं
चित्रकाव्यकुसुमैः प्रविराजम्।।

जीयात् रमाकांतमुखारविंदात्
विनिर्गता काव्यकला सुरम्या ।
द्राक्षासवा पुष्पितवाक्यरीतिः
मुदंकरी संस्कृतमानसानाम् ।।

हिमालयविनिःसृता चलति पूर्णमंदाकिनी
अशेषजनसाहिती कलितशुक्लसंवाहिनी ।
करोति रसमज्जनं विबुधचित्तसंतोषदं
ददाति नितरां मुदं निगमबोधयोधायनीम् ।।

२१.११.१९९०

# शारदातनय

इन्दुप्रकाश मिश्र 'इन्दु'

रूप रंग राम सा औ तन पाण्डु भीम सा है ।

मन में सरोवर लहरता भी प्यारा है ।।

मुख में सदा निवास कर रही वीणापाणि ।

सारा व्यक्तित्व ही कमल से सँवारा है ।। १ ।।

सबके लिए सनेह उर में अखण्डित है ।

पण्डित का काव्य क्षेत्र सावनी फुहारा है ।।

भीगा एक पल मन, तप्त धूप भूल गया

कोटि-कोटि बार यही सोचा औ विचारा है ।। २ ।।

राजधानी दिल्ली में निवास कविराज का है ।

राजा और प्रजा की आँख का सितारा है ।।

क़रे जहाँ पे विद्वत्समाज कोई गोष्ठी ?

वहीं पे शारदातनय देता सुख सारा है ।। ३ ।।

मेरे घर आने की कृपा की है जब-जब ।

यथाशक्ति पलकों से पथ को बुहारा है ।।

रवि 'इन्दु' जिस भाँति जग से दुलारे यहाँ ।

उस भाँति कान्त रमाकान्त भी दुलारा है ।।४।।

विद्या से विनय पाया, विनय से पात्रता को ।

पात्रता से धन, धर्म, मित्र परिवारा है ।।

मधु सी मिठास हर बोल में टपक रही

सच, पीया मैंने पास बैठ रस-धारा है ।।५।।

(परम श्रद्धेय,सहृदय सुकवि पण्डित रमाकान्तशुक्लजी के श्री चरणों में वात्सल्य एवं आशी के इच्छुक इन्दु की सादर भेंट२-१२-९० प्रयाग)

# शतं जीयाद् रमाकान्तः

याज्ञिकसम्राट् पं. लालनकृष्ण शास्त्री

।।श्रीः।।

छन्दोबद्धं जगत्सर्वं वर्तते यस्य वाङ्मये ।

शतं जीयात् रमाकान्तः शुक्लवंशसमुद्भवः ।।

व्यतीतः कालः पञ्चाशद्वर्षेभ्योऽप्यधिकः । स्मरामि तान् साहित्य-सुधासंसिक्तमानसान्, संस्कृतसाहित्यसमुन्नतिबद्धकक्षान्, भास-कालिदास-समसर्वरससमानाधिकारान्, ब्रह्मर्षिपदविभूषितान् ब्रह्मनिष्ठान्, भगवच्छङ्करपादतुल्यसमुपासकान्, स्वीयाचारसंर-क्षणचतुरान्, छात्रोपकारपटून्, सभा-संगोष्ठी-शोभा-संवर्धन-बद्धपरिकरान्, गङ्गातरङ्गावलिनिर्मलान्, जिह्वाग्रविलसित-शारदाभाभासितान्, स्वच्छगौडवंशोद्भवान्, श्रीपण्डितप्रवरान्, परिषच्छोभाकरान्, साहित्यार्णवसंस्नातान्,ज्येष्ठान्, श्रेष्ठान्, प्रेष्ठान् श्रीसुहृद्वर्यान्, श्रीरमाकान्तमहोदयपितृचरणान् श्रीब्रह्मानन्दजी-शुक्लवर्यान्। संस्कृते जागर्ति काचन लोकोक्तिः ''**आकरे पद्मरागाणां जन्म काचमणेःकुतः**'' अतः तेषां श्रीशुक्लमहाभागानां प्राङ्गणे ''**खेलति शारदा यत्र**'' इत्याभाणकं स्वीकृत्य पराम्बायाश्श्रीजगदम्बायास्सरस्वत्याः कृपापीयूषलहरी सर्वेषु शुक्लमहाभागानां पुत्रेषु समानरूपेणाविर्भूता। इत्येतत्सर्वं तपस्विवर्य्यस्य श्रीब्रह्मानन्दजी-शुक्लमहाभागस्य तपःपुञ्जमेवेति निश्चिनोमि । तेषां पञ्चपुत्राणाम्मध्ये तार्तीयीकाः पुत्राः किलामी श्रीरमाकान्तशुक्लाः । तेजसा तपसा वपुषा च प्रतिपलं, प्रतिगोष्ठीं प्रतिसभां च तथैव समलङ्कुर्वन्ति श्रीरमाकान्तशुक्लाः यथा ''मृगेषु केशरी''। एतेषां चरित्रनायकानां श्रीशुक्लमहाभागानां वाग्व्यापारोऽपि ''कवितासौष्ठवं प्रतिपलमारोहति प्रस्फुरति चौष्ठमध्ये । श्रीशुक्लमहाभागानां कविता-शैली तु प्रसादगुणगुम्फिता सर्वेषां सहृदयानां श्रोतृगणानां चेतश्चमत्कारिणी सर्वदा सर्वथा चाह्लादयति मनांसि सचेतसां चेतांसि । वाराणसिकमल्लिदिगुञ्जनारश्रोतारः, प्रदत्तश्च सभागारे

''करतलध्वनि'' द्वारा समाह्लादकुशला एव दृष्टाः। जनकसुतयोरनयोश्श्रीब्रह्मानन्दजी- रमाकान्तयोर्मध्ये-रघुवंशोक्तदिलीप-रघुमध्यगतकालिदासोक्तिः कीदृशी समीचीना मनोहारिणी समयोचिता च वर्तते-यथा

''युवा युगव्यायतबाहुरंसलः
कपाटवक्षः परिणद्धकन्धरः ।
वपुःप्रकर्षादजयद्रघुर्गुरुं
तथापि नीचैर्विनयाददृश्यत ।।''

व्यतीतानि बहून्यब्दानि खुर्जावास्तव्यानां श्रेष्ठिवर्य्याणां श्रीगौरीशङ्करगोयनकामहोदयानां सद्मनि- याज्ञिककेशरिणां हाथरसवास्तव्यानां श्रीराजारामशास्त्रिवर्य्याणां समक्षे वेत्रासनासीनैः स्व. श्रीब्रह्मानन्दशुक्ल-महोदयैः-भारवेरर्थगौरवमिति पक्षमङ्गीकृत्य यत् पद्यं प्रावोचि, तत्पद्यमधुनापि मे स्मृतिपथमायात्येव- तदनुस्मरणपूर्वकम्-

''मदसिक्तमुखैर्मृगाधिपः करिभिर्वर्तयते स्वयं हतैः ।
लघयन् खलु तेजसा जगन्न महानिच्छति भूतिमन्यतः ।।''

अहो तेषां वैदुष्यं, निभालयन्तु विद्वांसस्तदेव वैदुष्यं पारम्पर्य्यक्रमेण श्रीमतां श्रीरमाकान्तशुक्ल-महोदयानां वाचि समुज्जृम्भते । इमे चरित्रनायकाश्श्रीरमाकान्तशुक्लमहोदयाः प्रौढम्पाण्डित्यमाश्रयन्ति यथा देववाण्यां तथैव भारतीयराष्ट्रभाषायामपि समाश्रयन्ति । दिल्लीनगरे (इन्द्रप्रस्थे) राजधानीकालिजपदवाच्ये महाविद्यालये संपाठयन्ति । अत्रैव देहलीनगरे वर्तते- एषां श्रीशुक्लमहोदयानामेका देववाणी-परिषत् । मुखपत्रमपि प्रकाशयन्त्यस्याः । मन्ये पूर्वजन्मवशादेव नूनमेषां जनिश्शुक्लवंशे समजनि । यतो हि शास्त्रे जागर्ति ''**शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते**'' । इमे शुक्लमहाभागा आशुकवयः परिनिष्ठित-शेमुषीकास्तथा परिषच्छोभाकराश्चेत्येवं निवेद्य विरमामि । आशास्यं च प्रयच्छामि-शतं जीवन्तु भवन्तः ।

# अभिनन्दन-संस्मरणे

कविरत्नम् कृष्णप्रसाद शर्मा घिमिरे

श्रीमतां तत्रभवतां सारस्वतयशःस्तम्भस्वरूपाणां देववाण्यैव देववाणीप्रिय-मात्राणां प्रियङ्कराणां देववाणी-परिषदः संस्थापकानां विद्वन्मूर्धन्यानां डॉ० रमाकान्तशुक्लमहोदयानां शुभाभिनन्दनावसरे समुपस्थितानां विदुषां समक्षं सश्रद्धं सदुपायनीकृतमभिनन्दनदलम् ।।

स्वमेधयैव समर्जितसत्कीर्तयः स्वचरित्रशुक्ला
डॉ० रमाकान्तशुक्लमहोदयाः !

धन्या भवन्त ऊरुशक्तिभृतः स्वकृत्यं
संसाध्नुवन्ति ससुखं सुरवाक्समृद्धम् ।
स्वाध्यायमित्थमिदमात्मन उन्नयन्त
आदर्शमेव विबुधेषु निवेशयन्ति ।।

साहित्यकृद्बुधवरानधुनातनांस्ता-
नुद्दिश्य संस्कृतसुस्कृतिसारगर्भान् ।
यन्नाम तत्रभवताऽध्यवसाययुक्तं
निर्मीयते किमपि तत्स्पृहणीयकर्म ।।

सन्त्यत्र भारतभुवि प्रथितस्वकृत्या
नैका बुधाः सहृदयाः कवयो वरिष्ठाः ।
सज्ज्ञानवन्त उरुगीतपदा महान्तः
सन्तश्च किन्तु कवितावशगा समे ते ।।

येषां मनः कवितयैव वशीकृतं सद्
रात्रिन्दिवं विहरति द्युतिमद् यथेष्टम् ।
त्रैलोक्यमेवमखिलं परिपूर्णकामं
या भ्रामयत्यहह! सा वनितेति मन्ये ॥

यस्याः प्रभाववशतोऽद्यतना बुधाश्च
मुह्यन्ति तद्ध्वनिषु तद्गतलक्षणासु ।
कैषां कथा तु कवयोऽप्यभिचारिणीषु
श्लिष्यन्ति यासु कविता-वनिता हि सैषा ॥

सांसारिकेषु विषयेषु विनष्टतर्षाः
काव्येषु दत्तमनसः कविताभिमर्षाः ।
तुष्टाः सदैव निजकाव्यकृतौ निमग्ना
भग्ना बुधा हि कविभिः सममात्ममग्नाः ॥

हंहो ! भवांस्तु सरसो हृदयेन शुद्धो
जानन्नपि स्थितिमिमां सकलां तदीयाम् ।
तास्ताः कृतीश्च सकलाः सफलं प्रगाय
किंवाऽऽत्मशुद्धिमभिवाञ्छति चेत् ''तथास्तु'' ॥

हंहो परगुणगृध्नवो विद्वासः ! इत्थं संस्तुतसद्गुणवरं विद्वत्प्रवरममुमेव रमाकान्तमिव स्वसद्गुणैर्देववाणीप्रियैरपि समभिनन्द्यं वन्द्यं सततं डॉ0 रमाकान्तमुद्दिश्य सञ्जायमाने तच्छुभाभिनन्दनावसरे श्रीमतां विद्वद्वराणां पुरतः संस्थापयितुं मामिहैव प्रचोदयत्येका तत्सङ्गमस्मृतिः ।

एकदाऽहं दिल्लीप्रवासावसरे चिरपरिचितं स्वमित्रवरं विद्वद्वरममुं दर्शनस्पर्शनसंभाषणादिभिः परिवर्धयितुं तद्गृहमार्गनिर्देशकेन केनाऽपि

विद्यार्थिना सहैव तद्गृहं गत आसम् । सत्कृतातिथ्येन तेनाऽहमभाणि कियत्क्षणानन्तरम् - मद्विरचिता इमाः कविताः श्रूयंतामित्यादि । संप्रदत्तावधानोऽस्मि कथयतु तावद्भवानिति मदुक्ते विदुषानेन श्रावितास्तास्ताः कविता यासु राजस्थानम्, भाति मे भारतम्, अहं स्वतन्त्रता भणामि तथा चोज्जयिनीत्यादिकाः । श्रुत्वा च या भृशं विमुग्धोऽभवमन्वभवञ्च काव्यानन्दाऽपरपर्यायं ''रसौ वै सः'' इत्यभिधेयं परमानन्दं शब्दविन्यासातिरेकोद्भवं तद्रचनाचातुर्यं सङ्गीतप्रधानम्। तदन्ते मयाप्यसौ विद्वान् निवेदितः- ममापि राजस्थानवैषयिकी स्वरचितैका कविता गीतिप्रधाना वरीवर्ति । तामेव भवन्तं श्रावयमि, श्रूयतामिति । तदस्याः शीर्षकं ''राजस्थानं प्राचीनमर्वाचीनञ्चे'' ति समुट्टंकितं वर्तते ।

अधुना राजति राजस्थानम्
बुधविबुधैरपि कृतसंस्थानम् ।।

यत्र पुराऽऽसीत् सुविततमभितोऽ
तुलमिव गहनं रेतःस्थानम् ।
गमनाऽऽगमने सततं भयदं
दुर्जयमपरं कालनिदानम् ।।

अधुना राजति राजस्थानम्
बुधविबुधैरपि कृतसंस्थानम् ।।

यत्र न चाऽऽसीच्छुपमात्रं प्राग्
वृक्षवराणां तत्र कथा का ?
जलमपि पातुं दुर्लभमासीत्
सकलकरालं रेतःस्थानम् ।।

अधुना राजति राजस्थानम्

खगतिभिरुच्चैःपातिभिरेवं
कृतयत्नेऽपि च पारं गन्तुम् ।
आत्मन आर्तिदमात्रमशक्यं

ह्यतिविकरालं मृत्योः स्थानम् ।।

अधुना राजति राजस्थानम्

आपतितैरिह कार्यविशेषै-

र्गमनाऽऽगमने कृतसंकल्पैः ।

पेयैर्भक्ष्यैर्युक्तं बहुभिः

साकं पथिकैरुष्ट्रैर्गम्यम् ।।

अधुना राजति राजस्थानम्

इत्यादिका दीर्घरूपास्ता वर्तन्ते ।

विद्वद्वराः! मदीयायां धृष्टतायामस्यां विषयान्तरदेयाभावादवश्यमेव मह्यं क्षमामेव वितरिष्यन्ति तत्रभवन्त इति चानुरुणध्मि । इत्यस्तु शम् सर्वेषामस्माकम् ।

प्रस्तोता सोऽहम्

कृ. प्र . घिमिरे ।

(सूच्यन्ते तत्रभवन्तो मुद्रापणकाले संशोधकाः सम्यग् दृष्ट्वाऽक्षराणि च विकृतान्यपि प्रबुद्ध्यैव संशोध्य मुद्रापयन्तु । स्यात् सर्वं विशुद्धं सुन्दरं च शव्दवाक्यविन्यासश्चेति । रुग्णोऽस्म्यहं किञ्चिदधुना । अतो लेखन्यपि विकृतैव सञ्जाता । )

कृ0 प्र0 घिमिरे

१७.१०.१९९० ई.

# श्री डॉ० रमाकान्तशुक्लस्य साक्षात्कारः

आचार्यरामकिशोरशर्मा

विद्याविद्योतितं वन्द्यं, ब्रह्मानन्दविभासितम् ।
कीर्तनीयं कविश्रेष्ठं, रमाकान्तमुपास्महे ।।

प्रतिपादितपाठशालापरिवर्तनोपक्रमे, सप्तषष्ठ्युत्तरैकोनविशंतिशततमे (१९६७), पूर्वपुण्योपलब्धप्रेमास्पदपरिकरे, ईसवीयसंवत्सरे, विहितवृष्टिनिरासे, सितम्बरमासे, श्रीकृष्णक्रीडाकलितकीर्तिकमनीये, महामहनीये, भजनानुरागिभजनीये, दुर्गुणद्वन्द्वदोषत्यजनीये, कलिन्दकन्याकीलालप्रक्षालितपापपङ्के, सर्वथा निष्कलङ्के, सततसमुपासितसाम्नि, गोगरिमाधिगतव्रजनाम्नि, कुञ्जस्थितसाधुशरण्ये, गुणिगणगण्ये, गिरिराजसान्निध्यसमवाप्तसमुत्कर्षे, पुण्यप्रहर्षे, मानसीगङ्गासंसर्गगलित-तापे, दुष्टजनदुरापे, सम्मानितनगरे, श्रीगोवर्धननगरे, वर्तमानादविरतविद्यादानाद्, विद्वद्विद्यार्थिप्रीतिहेतोः, श्रीगोयनकाकुलकीर्तिकेतोः, सम्पादितसमागतसत्पात्रभाग्योदयात्, श्रीमाधवसंस्कृतमहाविद्यालयाद्, भगवदनुरक्तं साधुभक्तं, श्रद्धोपासितशारदं स्वकर्मविशारदं, वरेण्यविद्यालयं, विहिताविद्यासंक्षयं; प्रशस्तपण्डितं, सन्मित्रमण्डितं, व्यापारप्रधानं, श्रीसरस्वतीनिधानं, भव्यभवनं, धर्म्यजनं, यशोधरं, खुरजानगरं, सम्भावितसम्पदं, साहित्यविभागाध्यक्षपदम् अधिष्ठातुमागच्छम्।

दानधर्मपरिप्राप्तपराप्रतिष्ठ - गुणिगरिष्ठ-सरलचित्त - पवित्रवित्त-विद्यानुराग - महाभाग - श्रौतस्मार्तकर्मप्रवीण - धर्मधुरीण - भौतिक-भोगानासक्त - प्रभुभक्त - पवित्रविचार - श्रीजटियापरिवार - कीर्तिस्तम्भे, शुभारम्भे, साचार्यवटुवृन्दालङ्कृते, निगमागमध्वनिझङ्कृते,

राजमार्गसमीप- विद्यमाने, प्रवर्तितविद्यादाने, सुखमये, श्रीलक्ष्मणदास- संस्कृत- महाविद्यालये, ससुखमध्यापयन्, समयं यापयन्, कतिपय- दिवसानन्तरमेव, बहुविद्यालयविरचनान्तःकरणस्य, अशरणशरणस्य, परोपकारपरायणस्य, संस्मृतनारायणस्य, इष्टापूर्तपुण्योपार्जनप्रवणस्य, सत्कृतसाधुगणस्य, अच्युतसेवासक्षणस्य, विचक्षणस्य, वेदानुमोदितव्यवहारस्य, श्रीगोयनका-परिवारस्य, विद्याप्रेमप्रमाणस्वरूपे, भूयिष्ठाभिरूपे, कमनीय- कार्याकलितकीर्तिकलापे, अवगलितत्रिविधतापे, शीतलमन्दसुगन्धसमीरे, कमनीयकुल्यातीरे, विराजमानेऽसमाने, तपोमये श्रीराधाकृष्ण-संस्कृतमहाविद्यालये, परीक्षितपण्डितप्रतिभया, सभया, आचार्यचयार्चनीयं चयनीयम्, आनन्दकन्दं श्रीब्रह्मानन्दमवाप्नुवम् ।

चिरं यावद् वैदुष्यश्रवणसमागतानां, विनतानां, काव्यकलानुरागिणां, गुणग्राहिणां, सारस्वतरसाभिलाषिणां, प्रभाषिणां, विविधवर्णसमुद्भवानां, बुद्धिविभवानां, सेवासत्रसक्षणानां, सुलक्षणानां, गुरुजनभक्तानां, विद्यानुरक्तानां, देश-विदेश-निवासिनाम्, अन्तेवासिनां, सस्नेहमसन्देहं, शिक्षणप्रशिक्षणाभ्यां, समधिगतभूरियशसः, सुमनसः, स्वस्वशास्त्र- श्रममहनीयानां, गुणिगणगणनीयानां, विद्यावदातबुद्धीनां, सम्पा- दितसिद्धीनां, परिपाठनपूर्णपटूनां, बोधितभूरिवटूनां, बुभुत्सुभजनीयानां- यजमानयजनीयानां, कमनीयकार्याणां, विद्यालयान्तराचार्याणां, समादर- विधायिनः, समयानुकूलसत्परामर्शप्रदायिनः, भक्तिभावित-चित्तानां, सत्संगनिमित्तानां, पुण्यपथपृच्छाभिलाषिणां, मृदुपरिमित - भाषिणां, पापतापापहर्तॄणां, नृणाञ्च मनस्तोषयितुं, पुण्यपक्षं पोषयितुं, तद्गतशङ्कापङ्कापकर्षिणः, परमानन्दप्रदपीयूषवर्षिणः, कृत- सर्वसाधारणोदयस्य, श्रीपण्डितब्रह्मानन्दशुक्लमहोदयस्य, स्थूलदर्शनापि सूक्ष्मदर्शना, सुख्यातापि कुख्याता, संस्मरणीयपूर्वोक्तकार्यकलापस्फूर्तिः, माधुर्यमयी मूर्तिः, साम्प्रतमपि मे चक्षुषोरग्रतः प्रतिभासते ।

संस्कृतसभासंयोजनाधिगतमाने, वाग्मित्वप्रधाने, परमपवित्रे, स्वकर्मक्षेत्रे, ललितलतानिकुञ्जे, पटुपण्डितपुञ्जे, महिममये, श्री- राधाकृष्ण - संस्कृत - महाविद्यालये, मुकुलितरम्यरसाले, कमनीयकाले, सम्बोध्यमानशर्मणि, वसन्तपञ्चमीपर्वणि, स्वनिर्देशानुसारं समायोजितायाः अभिमतायाः पूजितप्राज्ञप्रतिभायाः सभायाः संचालकपदं भजमानेन,

यजमानेन, विनयपात्रेण स्वच्छात्रेण समुपादिततोषम्,अदोषम्, अपरिहार्यं, सभाकार्यम् आकर्ण्य अमन्दमानन्दमनुभवताम्, अनुद्वेगवताम्, असारं, संसारं त्यजतां, ब्रह्म भजतां, भद्रभावोदयानां, श्री शुक्लमहोदयानां प्रशंसापात्रं, सारस्वतगात्रं वह्नौ होतुं सुधासमाननीरे, भगवती-भागीरथीतीरे विद्यमाने, तपःप्रधाने वृजघाटाभिधाने सुस्थाने, तदन्यतमं तनयं सौजन्यसदनं, विद्यावदातवदनं, दाक्षिण्यं प्रसारयन्तं, कर्तव्यकर्म प्रचारयन्तम्, उत्साहसिन्धुं, विदिताविदितबन्धुं, निश्छलस्वभावं, भद्रानुभावं सर्वेषां समक्षं, व्यवहारदक्षं, कलितकलान्तं श्रीरमाकान्तं सर्वप्रथममपश्यम् ।

धर्मोद्धारधियां, विगतभियां, परमात्मप्रीतिपुषां, यशोजुषां, संस्मरणीयसंवादानां, पूज्यपितृपादानां, बुधजनबोधितेषु शास्त्रानुमोदितेषु, दिवङ्गतशर्मसु, वैदिककर्मसु दत्तावधानः श्रद्धाप्रधानः संस्कृतसमुपासनसक्तयोः परमपितृभक्तयोः, प्रज्ञाप्राप्तप्रतिष्ठयोः, परमात्मनिष्ठयो, विधिवदधीतविद्ययोरनवद्ययोः काव्यशास्त्रकृतश्रमयोः, तदनुकूलोपक्रमयोः, चारुतमविचारयोः, सन्मार्गसंचारयोः, साधुस्वभावयोः, पुण्यानुभावयोः, पितृतुल्यस्नेहयोः, सद्गुणदेहयोः प्राध्यापकवरयोः, ज्येष्ठसोदरयोः समादृताज्ञः, प्राज्ञः, माधुर्यमण्डिते, सभापण्डिते, समवाप्तस्फूर्तौ, सौम्यमूर्तौ, शिष्यप्रिये, गुणनिलये सदाज्ञातत्परे कनिष्ठसोदरे सर्वदा हितबुद्धिः, प्राप्तप्रसिद्धिः यथाकथञ्चित्संबद्धेषु वयोवृद्धेषु, पितृसहयोगपरेषु, स्वाध्यापकचरेषु दर्शितादरो मनीषिवरः सहानूभूतिप्रदर्शनार्थमागतेषु, अपरिचितेष्वपि चिरपरिचित इव व्याहरन्, समुचिताचारमाचरन्, अयमसंशयमा-श्चर्याम्बुनिधौ न्यमज्जयत् सतां चेतांसि ।

दिल्लीस्थदेववाणी परिषदः संस्थापकः, संस्कृतसमाजव्यापकः, पण्डितराजीयप्रभृतिनाटकपुञ्जप्रणेता, परिषदश्च नेता, उत्तर-प्रदेशशासनप्राप्तपुरस्कारः, पवित्रसंस्कारः, शोधग्रन्थनिर्माता, रचना-परिचयदाता, अर्वाचीनसंस्कृतसाहित्यपरिचितः तत्प्रचारसमर्चितः, अर्वाचीनसंस्कृतसाहित्यपरिचय - अर्वाचीनसंस्कृत- महाकाव्यविमर्श-नामकखण्डत्रयात्मक-ग्रन्थसम्पादनदक्षः, कृतार्वाचीन-रचनारक्षः,

आकाशवाणी-नाटकमञ्चसमादृतकृतिः, महनीयसुमतिः, स्वप्रणीतं, दूरदर्शनाभिनीतं "भाति मे भारतम्"- रचनानिर्देशकः, काव्यकलोपदेशकः, मौरीशसप्रभृतिदेशकृतायोजनेषु, संस्कृतसम्मेलनेषु, स्वकवितागायकः प्रतिभापरिचायकः, विभिन्न संस्कृत- संस्थान-स्वरचित-कवितागानप्राप्तपरा-प्रतिष्ठः, हिन्दीसंस्कृतसाहित्यानुकरणीयनिष्ठः, सर्वथार्चनीयचरित्रः, अयं सत्पुत्रः "अनुव्रतः पितुः पुत्रः" इति वेदोपदेशमक्लेशलेशं श्रद्धापूर्वकं शिरस्यादधानः सततं सावधानः, गानकलामर्मज्ञस्य, पुण्यप्रज्ञस्य, अनेककाव्यरचयितुः स्वपूज्यपितुः, स्वकृतिभिरनवरतं श्राद्धमाचरतीति महत्प्रमोदास्पदम् ।

विद्वद्वटुविहितवन्दनस्य, समधिगताभिनन्दनस्य, प्राचीनपरम्परापुषः, परमविदुषः, गानविद्याचार्यस्य, कविगणानुकार्यस्य संस्कृतसेवासक्तस्य, स्वभाषाभक्तस्य, समवाप्तपरमानन्दस्य, पण्डितप्रवरस्य श्रीब्रह्मानन्दस्य, "आत्मा वै जायते पुत्रः" इतिवचनं प्रमाणयतः, पितृगुणान् गणयतः, तदनुरूपं स्वरूपं प्रतिपादयतः, तदतिरिक्तकलाभिस्तमधिकं प्रसादयतः, न केवलं देशप्रदेशेषु विदेशेष्वपि संस्कृतकवितारसज्ञान्, विश्ववर्तिविज्ञान्, रसनिधिनाद्भुतगानविधिना सुधासिन्धौ निमज्जयतः, संस्कृतसेवार्थं सर्वानपि सज्जयतः, राष्ट्रभक्तिमणिमण्डितस्य,राष्ट्रीयकवितापण्डितस्य, खुरजाजातोदयस्य, श्रीराधाकृष्णसंस्कृतमहाविद्यालयस्य भूतपूर्वान्ते-वासिनः, दृढविश्वासिनः, मनीषिमानसहंसस्य, श्रीशुक्लवंशावतंसस्य, "विद्या ददाति विनयम्" इति वचनोदाहरणस्य, असाधारणस्य, शान्तस्य, दान्तस्य, श्रीरमाकान्तस्य सर्वसुखकरे स्वर्णजयन्त्यवसरे, अभिनन्दनग्रन्थः प्रकाश्यत इति निशम्यामन्दमानन्दभनुभवन् शतं वर्षाणि जीवतादयमिति भगवन्तं भूतनाथं भूयो भूयोऽभ्यर्थये ।

# सहृदयकविकान्तः रमाकान्तः

-डॉ0 शम्भुनाथ आचार्यः

अद्य मोमुदीति भृशं मे चेतः, यदहं कविवरेण्यस्य डॉ0 रमाकान्त शुक्लमहाभागस्य पञ्चाशत्तमे जन्मदिवसे तस्मै सर्मपयिष्यमाणे अभिनन्दन-ग्रन्थे किमपि लेखितुं सम्पादकमहोदयैः डॉ0 'अभिराज' राजेन्द्रमिश्रैः सानुरोधमाज्ञप्तोऽस्मि । को ना हि नात्र वाञ्छति स्वात्मलेखनीं पवित्रयितुं कस्यापि अधीत-लोकवृत्तेः प्रातिभस्य कविधौरेयस्य साहित्यिकधारया सहृदयमनसां प्रबोधनपरेण हृदयाख्यापकेन च प्रबन्ध-निबन्धनेन । वाल्मीकि- व्यास- कालिदास- हर्ष- सूर- तुलसी- कम्बन- कृत्तिवास- मीर-ग़ालिब-शेक्सपियर-मिल्टन-प्रभृति कवीनां विषये किं नास्ति विद्वलेखनी-विमृष्टं किन्तु अद्यावधि यावत् तत्साहित्यमाश्रित्य यत्किमपि लिख्यते, प्रकाश्यते अथवा प्राकाश्यमानेष्यते तन्निखिलमपि साहित्य- रसिकान् विदितवेदितव्यान् विधातुं तद्रहस्यं चोन्मीलयितुमेवेति विदां विमर्शः । न खलु दोषैकदृष्टयो विद्वांसः अपि तु नीरक्षीरविवेकनिपुणा राजहंसा इव गुणग्रहिला एव ।

कल्पनाविलासित्वमथवा शास्त्रीयतानिर्वाहकत्वं न केवलं कवित्वस्य प्रभवतिः, न चालङ्कारनूपुरझंकृतिरमणीयपदत्वम्, अवयव-संस्थानरूप-रीतिविशेषसंयोजननिपुणत्वमेव वा केवलं कल्पते सहजकाव्यसृष्टये; तदर्थं तु हृदयसुधारसनिर्झरीनिष्यन्दोन्मज्जननिमज्जन- समुद्भूता-नन्दतन्मयीभवनयोग्यताकत्वं हि काव्यबन्धस्य परमावश्यकमिति काव्य-रहस्यविदां समुच्छ्वसितम् । परम्परानपेक्षि वर्तमानत्वं, तिरस्कृतवर्तमानं पारम्परिकत्वं च नोचितं, तत्समन्वये एव विदुषां श्रद्धातिशयदर्शनात् । एवम् अधीतलोकशास्त्रो नित्यमभ्यसन् प्रातिभनयनः कश्चिद् विरल एव कवियशसे परमाधिकृतः । हर्षस्यायं विषयो यत् ब्रह्मानन्दसमुद्भवो यशसा शुक्लः परमसहृदयः कविकान्तः कवितल्लजः श्रीरमाकान्तशुक्ल-महाभागः कवि-निकषे निपुणं परीक्षितोऽपि स्वात्मवैशिष्ट्यं किमपि स्थापयत्येव अञ्जसा ।

## अस्य सहृदयत्वम्

अस्याग्रजेन डॉ0 कृष्णकान्तशुक्ल-महाभागेन सह मम परिचयस्तु आकाशवाणी-केन्द्रेषु विभिन्नकविसम्मेलनेषु च सहोपस्थित्या क्रमशो नैकट्यं जग्राह किन्त्वनेन सह परिचयस्य अवसर एव न कोऽपि लब्धः। अस्य कीर्तिं श्रावं श्रावं तद्दर्शनौत्सुक्यं मनसि किमपि स्थानमभजत्। कालः शनैः शनैः स्वगत्या व्यतीयाय।

अयमासीत् उत्तरप्रदेशीयमैनपुरीनगरस्थे एकरसानन्द-संस्कृत-महाविद्यालये सुरभारती- सेवासंस्थानस्य वार्षिकोत्सवसमयः, यत्रोपस्थितेन मयासौ हिन्दीभाषाकविश्रीजगन्नाथदासरत्नाकरविरचितम् 'उद्धवशतकम्' आश्रित्य देववाण्यां भक्तितत्त्वं सविस्तरं विवृण्वन् तृषिताभ्यां नेत्राभ्यां सुचिरं निपीतः। एतदनन्तरं सम्पन्ने संस्कृतकविसम्मेलने तस्य संयोजकादेशाद् उदूढसञ्चालककार्यभारेण मया काव्य- पाठाय समाहूतोऽयं यां काव्यरसधारां प्रावाहयत् तदवगाहनपुलकितोऽहं व्यस्मरमात्मानं कस्मैचिदनेहसे। यथा श्रुतः तथा दृष्ट इति तोषमाप्तवान्। इदानीं यावद् आवयोः वार्तालापोऽपि न समजनि।

परम्परया संक्रान्तमञ्चसञ्चालनभरोऽयम् अदृष्टश्रुतपूर्वतया मां प्रति बिभ्रत्कुतूहलः ''नवागन्तुकोऽयम्'' इति सकौतुकं काव्यपाठाय समाह्वयत्, किन्तु आश्चर्यमिदं यत् काव्यपाठं विदधतो मम ''यस्य वेदे रतिर्यस्य शास्त्रे मतिः'' इति प्रथमं छन्दः संश्रुत्यैव ''वाह-वाह'' इति प्रस्फुटितसाधुवादो मम प्रशंसको बभूव, काव्यपाठान्ते च मां भुजाभ्यामुपाश्लिष्यत्, स्नेहविगलितश्चाहमपि तमाश्लिष्यन् आनन्दममन्दम् अन्वभवम्। ततो विश्रमावसरे एकस्मिन्नेव कक्षे अग्रजेन डॉ0 कृष्णकान्तशुक्लेन सहासौ सम्पूर्णं दिवसं विविधच्छन्दोविषयात्मकं मम काव्यमश्रृणोत् स्वात्मनश्च अश्रावयत्। अत्रैव अन्तरा अन्तरा सञ्चलिते वार्तालापे डा0 रमेशचन्द्र शुक्ल-सम्बोधितं मम पत्रवृत्तमधिगत्य चाब्रवीदसौ ''अहं तत्पत्रमधीत्य भृशं प्रासीदम्, तत्प्रभाविततया च लेखकस्य काल्पनिकीं छविं मनसि निधाय शुक्लमहाभागाय प्रायच्छमिति'' तत्पत्रमपि स्नेहदृढीकरणे हेतुतामापद्यत। तदानीमेवासौ मां देहलीसमागमनाय निमन्त्रितमिव व्यधात्।



देहली-आकाशवाणीकेन्द्र-संस्कृतकविगोष्ठी-प्रसङ्गे समुपस्थितौ कारणता-

मयमेव उवाह । एवं शनैः शनैः आवां परस्परमभिन्नत्वमिव अनुभवन्तौ कमपि आनन्दविशेषं लभावहे । अस्य व्यवहारोऽयं न केवलं मया साकमेव, एतस्य सान्निध्यं प्राप्य सर्वे एव इदृग्विधमनुभवन्ति । डॉ0 राजेन्द्रमिश्रः, प्रो० श्रीनिवासरथः डा0 इच्छाराम द्विवेदी च ममानुभवमेव अनुवदन्ति ।

## अस्य कवित्वम्

सहृदयत्वं सामाजिकजीवने इव कविजीवनेऽपि प्राधान्यमर्हति । इदमेव सामाजिकेभ्यः कवेः व्यतिरिक्तताविधायि तत्त्वम् । अस्याभावे सत्यामपि प्रतिभायां सत्यपि चाभ्यसने न तादृक् काव्यस्फुरणं कवेः यल्लोकोत्तरानन्दहेतुतया समाद्रियते काव्यरसिकैः सुधीभिश्च समीक्षकैः । एतद्विरचितं काव्यवाङ्मयं अस्य कल्पनाशीलधौरेयत्वं, हृदयस्पर्शिगुण-महिमविभूषितत्वं, राष्ट्रियताशबलितत्वं, रूढिमुक्तिविमलत्वं, याथार्थ्य-प्रियत्वं, बाणैरिव प्रबुद्ध-सरस-काव्यवचन- विन्यासैः रसिक-शिरोविधूनन-क्षमत्वम् अथ च कविपुङ्गवत्वं पदे पदे स्फुटीकुरुते ।

चतुरस्रप्रतिभाशालिनश्चास्य कवेः बहुविधम् अनेकविधञ्च साहित्यं प्रायेण सर्वाः समस्याः संस्पृशति । अस्य अनेकानि नाटकानि, रेडियो-रूपकाणि, प्रबन्धायमानानि काव्यानि, स्फुटानि च काव्यसंकलनानि अस्य रचनाधर्मित्वं, विश्व-बन्धुत्वं, राष्ट्रियधारासम्पृक्तत्वं, राष्ट्रस्य वर्तमान-दुर्दशां प्रति मनःक्षोभित्वं, जाति-रूप-भाषा-वेशादिवैभिन्न्येऽपि अन्तरा-त्मैकत्वं, संस्कृतभाषानुरागित्वं, देशानुरागमण्डितत्वं, सरसहृदयत्वं प्रख्यापयन्तीव तस्य आधुनिककविसन्दर्भे गौरवास्पदं पदं निश्चिन्वन्ति ।

राष्ट्रियं गौरवं गायन्नसौ क्वचिद् अनावृष्ट्या चेखिद्यते, क्वचिद् पयोदानां स्वागतं व्याहरति, स्वातन्त्र्यस्य मानवीकरणापदेशेन स्ववक्तव्येषु क्वचिद् क्लिश्यति, क्वचिद् हृष्यति, क्वचिद् दूयते, क्वचित् प्रसीदति, क्वचिदैक्ये बहुत्वं बहुत्वे चैक्यं पश्यति, क्वचिद्राष्ट्रदेवताया आह्वानं कुरुते, क्वचिद् उज्जयिनीं चित्रयति, क्वचिच्च राजस्थानमाध्यस्थ्येन राष्ट्र-मुद्बोधयति । शब्दैराख्यातं स्ववक्तव्यमसौ समस्ते भारते विभिन्न-मञ्चानधिष्ठाय ललितमधुरमन्द्रस्वरैः श्रावयन् श्रोतॄन् विमोहयति, स्तब्धानिव विदधाति वशंवदाँश्चेव कुरुते । सम्मेलनेषु अनुपस्थितान्

पाठकान् ''अर्वाचीनसंस्कृतम्'' इति त्रैमासिकपत्रिकासम्पादनेन स्वात्मकाव्यनिर्विशेषम् अन्येषामपि काव्यरसैः तर्पयति ।

सर्वं चैतत् सभासु, गोष्ठीषु, सम्मेलनेषु च समुपस्थितानां जनानां समक्षमेव प्रायेण सम्पादयितुं शक्यते । गृहे गृहे, जने जने च कथमस्य सन्देशः संयातु इति विचिन्त्य अनेन दूरदर्शन-माध्यमेन ''भाति मे भारतम्'' इत्यस्य प्रस्तुतिं विधाय स्वात्मसन्देशं च सर्वजनसुलभं कृत्वा किमप्यदृष्टश्रुतपूर्वमिव विहितम् । विदेशेष्वपि सुरभारती-गौरवं वर्धयामासेत्यपि सत्यं वचः ।

## अस्य कान्तत्वम्

कान्तत्वं हि स्पृहणीयत्वं लोकप्रियत्वं वेति वक्तुं शक्यम् । इदं कान्तत्वं कतिपयगुणापेक्षि । गुणानामात्मधर्मत्वं लोकशास्त्रोभयसम्मतम्। रूपाकृतिरपि गुणेष्वेव अन्तर्भवति, ''सर्वावस्थासु रमणीयत्वमाकृति-विशेषाणाम्'' इति कालिदासेनापि प्रतिपादितत्वात्। सत्स्वपि दोषेषु कस्यचिदेकस्यापि गुणस्योत्कृष्टतया पदार्थस्य ग्राह्यता न कदाचिद् व्याहन्यते । सत्त्वेऽपि उग्रगन्धे लशुनस्य, सत्त्वेऽपि कलङ्के चन्द्रमसो वा निर्गुणत्वं केन प्रतिपाद्यते ? यदा एकेनापि गुणेन वस्तुनो ग्राह्यत्वं दृष्टिपथ-मायाति तदा गुणसमवायालङ्कृतस्य पुरुषस्य स्पृहणीयतायां कः सन्दिहेत्! एवं सहृदयता-कवित्व-प्रतिभा-कान्तत्वाद्यनेकगुण-गणालङ्कृतस्य प्रातिभस्य चास्य कवेः कान्तत्वं स्वयं रमया गृहीतं चेत्, कथं नास्य यशसा शुक्लत्वं जगति विद्वद्भिः परिकीर्तितं भवेत्, लक्ष्मी-सरस्वत्योः कादाचित्कतयैव क्वापि एकत्र संस्थितेः अस्मिन् सहजतया दर्शनादपि चास्य सहृदयत्वं, कवित्वं, कान्तत्वं, यशसा शुक्लत्वं च प्रस्फुटीभवत् चेतश्चमत्करोति नः । अस्मिन्नभिनन्दनावसरे शतायुष्ट्वमस्य कामये तत्स्नेहपरिषिक्तोऽहं अधोलिखितैः कतिपयैः श्लोकैः-

ब्रह्मानन्दसमुद्भवः कविवरः श्लाघ्यश्च शुक्लः सुधीः
विद्वद्गोष्ठगरिष्ठकाव्यरचनासच्चातुरीप्रातिभः ।
कान्तः कोऽपि रमाविलासललितः शान्तः सुहृल्लालितो
जीव्याद्वर्षशतं मुरारिचरणासक्तः कविर्निर्मलः ।।१।।

मधुरपदनिबन्धे कस्यचित् क्वापि शक्तिः
क्वचन पुनरिहौजो वाक्क्रमे कस्यचिद्वा ।
स्फुरति मसृणबन्धे कस्यचिद् वा प्रसादे
तिसृषु तव गुणेषु प्रातिभं छन्द आस्ते ।।२।।

कवयति मधुक्रम्रं स्नेहपीयूषपुष्टो
भवति पुनरुदग्रो वीक्ष्य भग्नां व्यवस्थाम् ।
सुहृदिव जनलोकं वक्ति धर्म्यं च पथ्यं
सहृदयकविकान्तः कोऽपि कान्तो रमायाः ।।३।।

सकलकविमनोज्ञः प्रातिभः कर्मधिष्ण्यः
सुरगुरुपदभक्तः काव्यतत्त्वार्थविज्ञः ।
जयतु गिरिशसेवालब्धशक्तिश्च वाग्मी
सहृदयकविकान्तः कोऽपि कान्ता रमायाः ।।४।।

शुक्लः कविर्मनस्वी कृष्णकान्तानुजो रमाकान्तः ।
जीव्याच्छतं हि शरदां कवयन्नुत्कृष्टतरं दिव्यम् ।।५।।

पुनश्च मया ७.२.१९८८ ई0 दिनाङ्कितपत्रमाध्यमेन कविप्रवराय डॉ0 रमाकान्तशुक्लमहाभागाय यानि आशीर्वचांसि समर्पितान्यासन् तान्यप्यत्र पुनः प्रस्तूयन्ते[१] ।

---

१. इमे श्लोकाः 'गीतिसङ्गीतिनादस्वराभ्यर्चितः' २.१२८ तमे पृष्ठे दीयन्ते-सम्पादकः।

# डॉ० रमाकान्तस्य कान्तत्वम्

आचार्यरामदयालुः शास्त्री

बहुविध-प्रतिभा-सम्पन्नाय, आधुनिक-कवि-मूर्धन्याय, संस्कृत-लोकलोचन-भूताय, अद्यावधि साहित्य-साधनाऽविरामाय, उत्तुंगध्वनि-दिग्गजाय, सुन्दर-व्यक्तित्व-विधानाय, सरस्वत्या वरद-पुत्राय, वाक्चातुर्य विनायकाय, बाह्याभ्यन्तर-समता-विकासाय, जन-जन- विद्वज्जन-समादृताय, प्रभाव-जनकाय, सुस्वभावाय, व्यक्तित्व-कृतित्व-पूर्णाय, देववाण्याः विविध-विषय-वितानाय, अनारतं विद्याभ्यसन-विश्रुताय, मृदुमानस-सरल-परिवेशाय, आगम-निगम-सार- संकराय, सर्वेषामेव शिवशङ्कराय, महापुरुष-चरित-समाय, एकत्वेऽप्यनेक-संस्थानाय, निश्चल-निश्छल-निरभिमानाय, संस्कृत-संस्कृति-गवाक्षाय, अनेक कृति-कर्तृत्व-पुरस्कृताय, स्वस्य रचना-राशि-निमग्नाय, अन्येषां सत्कृति-वितति-विलुप्ताय, वयसो मध्यमाय, पञ्चाशद्वर्षीयाय, काव्य-रञ्जन-प्रभञ्जनाय, गीत-गायन-गुञ्जनाय, सुरभारतीमणि-माणिक्याय, देहली-दीप-न्यायेन अन्तर्बाह्य-प्रकाशिताय, काव्य-गज-महावताय, कनिष्ठिकाधिष्ठिताय, विद्वत्तल्लजाय, श्रीमते रमाकान्तशुक्लाय नमो नमः।

पद्यतेऽसौ पादपद्भ्यां देशदेशान्तरेषु संस्कृत-सेवार्थम्, ज्ञायतेऽस्य जानुभ्यां सन्तुलित - गमनागमनम्, मिमीतेऽयम् ऊरुभ्यामुर्वीतलम्, उदरेणोदरीकरोति सकलसंसारज्ञानम्, वक्षः सम्भूत-निम्नोन्नत-गतिभिरान्दोलयतीव वायुमण्डलम्, नाभितलावर्तेन प्रतीयते नारायणस्य कमलोज्जृम्भणम्, अत्रैवास्य शरीरस्य सप्तधातु-रचना चक्रम्, गभीरत्वेन महासागराणामपि तलोद्घाटनम्, बाह्वोरस्य यशोबलम्, विशाल-तयाऽऽनुजानुत्वम्, हस्तपञ्चकयोर्दानादानम्, अंगुलीषु हीङ्गितम्, हस्तल्याम् आचमनम्, रेखासु भाग्यवतो भाग्यम्, मणिबन्धे हि दक्षिणे धर्मसूत्रम्, अपरस्मिंश्च समय-प्रवर्तन-सूचकम्, मेलनेन करयोः सम्पूजन-

मुद्रा, करतल-कमलै रुद्राभिषेकः, प्रस्कन्द-स्कन्धयोः रम्यरयः, प्रसारणेनाभितो मापकत्वं हि नभसः, नमनेन पृथिवीजनाशीषसंकेतः, कुञ्चनाकुञ्चनैर्नाट्यभावः, योगासनान्यस्य व्यायामायासः, दर्शनेनाऽयं भव्यमूर्तिः, जीवनेनाऽयमिहलोकपूर्तिः, स्वभावेनाऽयं सर्वतः साधुः, प्रभावेनाऽयं वसन्तर्तुः, अन्तरेण धीरगभीरः, विचारेण प्रवाहितसमीरः, चतुर्वर्णेषु चाग्रिमः, वर्णनीयेषु निर्भ्रमः, साहचर्य-चर्याणाम् आचार्यः ।

अस्य कण्ठेनाऽकण्ठितं स्वर-शास्त्रम्, ध्वनिगर्जितेन तिरस्कृतो हि मेघरवः, आलापेन मोहितं मित्रमण्डलम्, ग्रीवाविस्तरेण प्राप्तं मल्ल क्रियाफलम्, रुद्राक्ष-धारणेन खलु संस्कृतं वक्षःस्थलम्, नामस्मरणेन हृदि संस्कारः, साधारणरूपमेवाऽऽस्याऽलंकारप्रकारः, लेखन-सम्पादन-वस्तूनामेव सम्भारः, प्रतीयते विधिना त्वस्य ललाटपटल एव लेखिता विद्वत्ता, प्रवेशिता वै मस्तिष्के विचाराचारप्रवणता, उद्भासिताः ब्रह्म तरङ्गावलयः, रेखिता विद्वद्वरेण्य-भाग्यता, विन्यस्ता विशेषेण ब्रह्मज्ञान-विततिः, विस्तारिता काव्य-कविता-कादम्बिनी, उद्घाटिताः ज्ञानगरिम-ग्रन्थयः, प्रकटिता लोकालोक-व्यवहार-राशयः, संवलिताः परापर-तुष्टि-विभ्रमाः, प्रदत्ताऽस्मिन् यशोवाचो धन्यता, संवाहिता हि विविधकार्य-क्षमता, दर्शिता ह्येनं देववाणी-भक्तिः, प्रफुल्लिताऽस्य तनुषि अदम्यभक्तिः विलुप्ताऽस्मात् संसार-विलास-लालसा,कृष्टान्यस्य मूर्धनि सुसंस्कार-सस्यानि, प्रदीप्ताः ब्रह्मज्ञान-तेजोमरीचयः, प्रशिक्षिताः कर्माकर्म-रीतयः, प्रवाहिताः ह्यद्यतन्यो विमलाः कलाः, धर्मार्थकाममोक्षाणामेकत्रता ।

चिन्तनेऽस्य सततम् स्फुरन्ति नैकशः ज्ञानानुभूतयः, उल्लसन्ति नवनवोन्मेष-लहर्यः, विलसन्ति भजन-भाव-भूमयः, संभवन्ति, दिनन्दिनं सुकृतयः, प्रभवन्ति ह्यद्भुतविधानकृतयः, प्रसरन्ति महात्मोचित-दीप्तयः, चकासन्ते खलूर्जारश्मयः, भासन्ते हि दिव्यलोकदृश्यानि, आसन्ते ह्यार्यादर्शकृत्यानि, आयन्ते स्वर्लोक-सुसुखानि, म्लायन्तेऽशुचि-दुरितानि, प्रस्फुटन्ति प्रफुल्लता-प्रसूनानि, पलायन्ते ह्यसद्भाव-वातलानि, विकसन्ति प्रत्यहं काव्यधाराः, प्रवहन्ति चोरसि गुण-ग्राम-गंगाः।

महोदयेनानेन विविधानि संस्थानानि संस्थाप्यन्ते, अनेकाः संस्था अस्य पदग्रहणेनाऽलंक्रियन्ते, अनेकास्तदीय-वरदाशीर्वादैः संभूयन्ते, अनेका-स्तत्पादपद्म-न्यासेन वितीर्यन्ते, अनेकास्तन्निरीक्षणोक्षण-कटाक्षैः सनाथाः

जायन्ते, अनेकास्तत्परामर्शविमर्शेण सुस्थिरायन्ते, अनेकास्तद्-दानानुदानेन विलसन्ते, नैकशस्तद् विद्या-ज्ञान-महिम्ना आप्लाव्यन्ते ।

आलोकयन्तु समयसूचिकाघटिकेव विभिन्नरूपविधानमस्य -परिवार-दारकेषु सुव्यवहारिजनकः, गृहिण्यै जन्मजन्मान्तर-वरणीयाऽऽदर्शवरः, पूजनीयानां वृद्धानां सेवाऽऽदरनम्रतादिभिः पुण्यसवनम्, अभ्यागतानाम् आतिथ्य-सत्कारेण शुभाशंसापात्रम्, मित्रोदासीनशत्रुत्व-गुणेषु तृतीय-वर्जितः, सम्मिलित-कार्यव्यापारसहचरेषु तज्ज्ञ-विज्ञः, घनिष्ठेषु भ्रातृ-बान्धवेषु सौहार्द-पुञ्ज-निकुञ्जः, आबाल-वयस्क प्रौढेषु तत्तद्भाव-विभाव-स्वभावः, एकाकिनां समूहगतानां वा नर-नारीणाम् आकलन-विषयः, छात्राणाम् आदर्शनैपुण्यम्-गुरूणामायातं सकल-पुण्यम्, देशीयानाभाजन्म प्रयोजनयोजनसाधनम्, विदेशीयानाम् आवासप्रवासदर्शनम्, अधुनाऽत्र पश्चात् तत्रेति व्यस्ततमः, यथेच्छाप्रयोगहस्तामलकः।

विशेषेण दर्शनीया अस्य गुणग्राम-गरिमाणः-विद्वत्सु विद्याविलासवैचक्षण्यम्, कविषु काव्यरसानन्द-दोहनम्, लेखकेषु ललितललामलेखलीला, विप्र-क्षत्र-विशां वाचो वाग्मिता,सत्यामपि दुर्लभयोग्यतायामदम्भिता, अविलम्ब- स्वावलम्बभवा योग्यता, विविधविषयवर्णनप्रखरता, वक्तृषु वाणीवशोवायनम्, गायकेषु गायन-गुञ्जारगौरवम्, सभायां सभ्यसौम्यसौरभम्, शान्तैकान्तक्षणेषु कर्मन्दिकर्मकरः, यान-प्रयाणयात्रासु यशस्थो यायावरः, मञ्चपात्रेषु प्रकर्ष-प्रभाव-प्रभवः, नाट्यविधानसंगमेषु विलक्षणः।

अद्यत्वेऽप्यनेन कर्माणीमानि क्रियन्ते विशेषतः- महाकाव्य-खण्ड-मुक्तकानां संरचना, कथोपन्यासानां रचना, हास्यव्यंग्यविनोदानामालेखन-प्रकाशनम्, गद्यगीतानुवादानां प्रणयनम्, विविध-समस्या-पूर्तिकरणम्, स्तोत्राणां स्तवनम्, नाट्याभिनेयानाम् आमञ्चनम्, शताब्द्या अस्याः संस्कृत-परिचयदानम्, विविध-नवीन-शोधप्रबन्ध-प्रयोग योगदानम्,समये समये साक्षात्कार-प्रकार-प्रसारणम्, आकाशवाणीदूरदर्शनकार्यसाधनम्, सफलपत्रकारकार्य-सम्पादनम्, साहित्यरचनायामेवाऽऽह्लादनम् । किं किं नास्त्यस्य प्रसंग-संगमे ?

अस्य गमनागमनेन वै मण्डितं महीमण्डलम्, दर्शनेनाक्षिलक्ष्यीभूतानि देशान्तराणि, श्रवणेन श्रुतानि विविध-विषय-कीर्तनानि, घ्राणेनाऽघ्रातानि

सकल-संसार-सुगन्ध्यानि, त्वचा त्वचितानि विश्व-विषय-प्रयोजनानि, मुखेनोक्तानि वाच्योद्‌गार-गभीराणि, जिह्वया लेलीढानि स्वाद्यास्वाद्य-वितानानि, ओष्ठाभ्याम् आचुम्बितानि ऊर्ध्वाधो विलसितानि, गलान्तेन निगीर्णानि समस्त-संकटापन्नानि, श्वासैरुच्छ्‌वसितानि तनुषो मलानि, दन्तैश्चर्वितानीव सर्वाणि दुरितानि, कराभ्यामागृहीतानि भूवलयविभवानि, मनसाऽऽकर्षिता गुणग्रामाः, चेतसोद्वमितानि तानि दुश्चिन्तनानि।

बहुवित्त-समार्जनम्, परिग्रह-चिन्तनम्, यशस्यभिरुचिः, संकल्प-विकल्प-विश्रुतिः, मनसिज-कामना, लोकालोकैषणा, बहुविधाऽऽस्वाद्य भोजनानि इतस्ततोऽजल्पजल्पनानि असन्तुलितसमयहानिः, दुर्योग-पद-संयोजनानि, बहुभोग-भवानि कृत्यानि, अतिशय-प्रदर्शन-सम्भाषणानि, अस्तरीयानि लोकादृश्य-दृश्यानि, असभ्यालेखलेखनानि, अहेतुकानि कार्याणि, अयुक्तानीव प्रयोजनानि, असंवारवारविलसितानि, अप्रयोजन-चिन्तनानि, अपि चातीव पिष्टपेषणानि, अनेनाऽस्वीकृतानि प्रायेण ।

पश्यन्तु तावत् निःस्पृहविलसितानि जीवनजन्यान्यस्य-देहं धारयतीवं केवलम् आर्यादर्शदर्शनाय, संसारे प्रसरति मात्रं संस्कृत-भारती- प्रसाराय, जागर्ति खलु भूतलजनजागरणाय, स्वपिति हि केवलं श्रमापनयनाय, सभाजयति केवलं समाज-संस्कार-करणाय, ब्राह्मी तनूरियं केवलं ब्रह्म विद्याविहाराय, भाषते हि केवलं संसारव्यवहाराय, केवलं राष्ट्रभाव-विभासाय, विशति वारेषु केवलं विश्वबन्धुत्व-घोषाय, व्यापृतोऽयं जनः कर्मक्षेत्रे केवलं स्वकर्तव्यनिर्वाहाय, विद्यायां विद्योतते भ्राशते केवलं विद्वज्जन-विलासाय, युनक्ति कार्येषु केवलं युवजनप्रेरणायै, भुनक्ति हि भोगान् केवलं मात्रास्पर्शनाय, जीवनं जीवति केवलं सांस्कृतिक-चेतनार्थम्, नाचरति कर्तव्यकर्म केवलं वेतनार्थम्, आयुरपि केवलं जीवनकालप्रवर्तनार्थम् अन्यच्च अखिलमस्य सर्वस्वं परोपकारार्थं केवलम्, नान्यत्किमपि इहास्ति जीवनप्रयोजनम् ।

एतादृशं हि महात्मानं सर्वतः- सम्भजन्तु देवानामाशिषः, देवाधिदेव-भगवतो वरदानान्यनेकशः, सज्जनानां सत्क्रियाः, विद्वज्जनानां प्रक्रियाः, राजराज्ञां सभाजनम्, याज्ञिकानां सुयाजनम्, श्रोतृषु हि श्रा[illegible]नम्, संघ



रंहेषु राजनम्, तनुमनसोर्नन्दनम्, मुहुर्मुहुरभिनन्दनम्, यात्रार्थं

जीवटता, विद्वद्वरेण्यभटता, ओजसोऽवापनम्, सुखेनायुर्यापनम्, सततं हि कर्मनिष्ठा, अभितोऽभिजन-शिष्टाः,अनायासेनार्थ-लाभाः, शास्त्राभ्यासेनाभा, मंगलानामायतनम्, लोकालोकप्रत्नम्, तुंगध्वनिगर्जनम्, परितो विहर्षणम्, शिष्टानां शिष्टता,विशिष्टानां विशिष्टता, रमणीयानां रम्यता, उत्तमोत्तम- परम्पराः, काम्यकमनीयावसराः, संस्कृतानां गुण- गरिमा, विश्वेषामस्माकं शुभकामनाः प्रतिफलन्तु श्रीमते रमाकान्तशुक्लाय ।इति।

# ''स्फीतं तद्व्यक्तिमत्वं स्फुटमनुहरति श्रीरमाकान्त-वाणी''

डॉ0 विन्ध्येश्वरीप्रसादमिश्रो 'विनयः'

साम्प्रतं सुरगवीसमुपासकेषु विद्वद्धौरेयेषु लोकप्रियमहाकविषु चान्यतमः श्रीमान् डा० रमाकान्तशुक्लः, स्वीयौदार्येण सहृदयत्वेन सरलतरलप्रभामण्डलेन प्रभावेण च कं सचेतसं नावर्जयति कं वा न वशीकरोति मनोहारिणा गीतिवैदग्ध्येन, ऊर्जस्वलराष्ट्रभावनासंवलितेन प्रसादगुणोपेतेन च संस्कृतकाव्यपाटवेन ?

देहली-विश्वविद्यालयाङ्गभूतस्य राजधानी-महाविद्यालयस्य हिन्दीविभागे वरिष्ठप्राध्यापकतां निर्वहदप्येष मनीषी देववाणी-परिषदः सफलसञ्चालकरूपेण, 'अर्वाचीनसंस्कृत' मिति त्रैमासिकपत्रस्य यशस्विसम्पादकरूपेण, गद्यपद्यमयनैकग्रन्थकर्तृत्वेन च गीर्वाणवाणी-परिषत्सु नितरां समादृतो लोकप्रियश्च ।

भारते विदेशेष्वपि यत्र कुत्रापि संस्कृतकवीनामायोज्यते समवायस्तत्र वीररसाञ्चितकाव्यनादेन कविकण्ठीरवस्तत्रभवान् श्री रमाकान्तशुक्लः कामप्यनिर्वचनीयामभिख्यां पुष्णाति, वपुषा वाचा वेषेण च मध्येमञ्चं पृथगेव विद्योततेतरामिति समेषां नः प्रतिपत्तिः ।

कविधुरीणस्यास्य काव्यसम्पत्तिश्चतुर्मुखी, मुक्तकगीत-नाट्यप्रबन्धादिषु सर्वत्र लब्धप्रसरा, नूत्नप्रयोगप्रवणा, दूरदर्शनाकाशवाणी-प्रभृतिसर्वकारसञ्चालितमाध्यमेष्वपि प्रतिष्ठिता लोकप्रिया चेति सर्वेऽपि विदन्त्येव सहृदयधुरीणाः पाठकाः दर्शकाः श्रोतारश्च, संस्कृतोपेक्षा-कषायितेऽस्मिन्वर्त्तमानेऽनेहसि महत्साफल्यं वैशिष्ट्यं चास्य प्रतिभावतः

सुरसरस्वतीसमुपासकस्येति न संशीतिलेशः ।

'भाति मे भारतम्' इत्यष्टोत्तर-शतस्रग्विणीवृत्तबन्धैर्निर्व्यूढं काव्यं राष्ट्रकविमैथिलीशरणगुप्तस्य ''भारतभारती''- काव्यवन्नितरां प्रसिद्धिं समवाप्य शोभतेतराम् राष्ट्रभाषांग्लभाषानुवादद्वयपरिवृढं नः समक्षं, तदनु ''जय भारतभूमे'', ''अहं स्वतन्त्रता भणामि'', ''भारतजनताऽहम्'' इत्यादीनि बहूनि काव्यानि अद्यापि राष्ट्रस्य सामयिकान् विषयान् दिग्दर्शयन्ति, तान् सम्यक् समालोचयन्ति, समुत्थितानां समस्यानां समाधानमपि निर्दिशन्ति ।

अस्त्यपरमपि वैशिष्ट्यमस्य कविवरेण्यस्य यदसावन्यानपि ज्येष्ठकनिष्ठकविजनान् यथायोग्यमभिनन्दयति प्रोत्साहयति मुक्तकण्ठेन तेभ्यो वितरत्यादरमात्मीयसौहार्दञ्च किञ्च तेषां काव्यांशानां कण्ठस्थीकरणं विधाय विदग्धगोष्ठीषु तदनुरूपस्वरसौष्ठवेन स्वयं गायनमपि करोति । गङ्गाजलधारावत्कलकलनिनादोल्लसितं हास्यलास्यविलसितं यथास्य व्यक्तिमत्वं सर्वानाह्लादयत्यावर्जयति तथैवास्य कविभारत्यपीति दृढं प्रतीमः । समासतः शक्यते वक्तुमेतदेव-

'शुक्ला सद्भावदुग्धाम्बुधिधवलकणै रागरम्या मनोज्ञा
ज्ञप्तिप्रज्ञप्तिपूर्णा दिनकरकिरणोद्दीप्तभासा, सुहासा ।
सद्वृत्तैर्गीयमाना विविधरसकलाकेलिमाधुर्यधुर्या
स्फीतं तद्व्यक्तिमत्वं स्फुटमनुहरति श्रीरमाकान्तवाणी ।।''

# प्रकाशको रमाकान्तः

डॉ0 केशवचन्द्रदाशः

समसामयिकसंस्कृतलेखनप्रकाशनधारायां डॉ0 रमाकान्तशुक्लः अर्धशतकस्य इतिहासः --------- स्वयमनुष्ठानविशेषः ------ अपरवशव्यक्तित्वे कश्चित् स्वतन्त्रप्रकाशः --------- ।

यथा प्रदीपः स्वविकासकारी -------- वर्त्तिविकारकारी ------- स्वेतरवस्तुप्रकाशकारी -------तथैव संस्कृताकाशकान्तो रमाकान्तः कनिष्ठवरिष्ठसमादरं समीकृत्य निरभिमानिन आत्मनो वसन्तं संस्कृतवर्त्मनि विपरिणमयन् नव्यं किमपि भव्यं निरमादिति अनुसरणीयोऽयम् अनन्य आदर्शः ।

रमाकान्तस्य • प्रञ्चाशद्वसन्तमभिलक्ष्य यः सारस्वताभिनन्दनमहोत्सवः परिकल्पितः तदर्थं वर्धापनमर्हति डॉ0 रमाकान्तशुक्ल-अभिनन्दन-समितिः ।

पुनरपि स संस्कृतान्तःकरणकान्तो रमाकान्तः प्रकृष्टप्रकाशः भूयादिति शुभकामना ----- ।

# रमाकान्ताभिधानो मे

# प्रकाशकमहोदयः

पं0 टी0 वि0 परमेश्वर अय्यरः

ग्रन्थत्रयं मे प्रकटीचकार ददौ च पारिश्रमिकं यथार्हम्।
निमन्त्रितं मां कविगोष्ठिकासु सम्मानयामास च दक्षिणाभिः।।

व्योमप्रसून (५0) मितवत्सरजातमस्य
जातस्य पूर्णमभवत् खलु सार्थकं च।
नो तार्किकाभिमतमित्यवधेयमेतद्
याथार्थ्ययुक्तमितरोपकृतिप्रपूर्णम्।।

छात्राध्यापनलब्धपुण्यविभवः साहित्यसेवाव्रती
सत्पुत्रत्रयलब्धिभाग्यविलसद्गार्हस्थ्यसज्जीवनः।
सद्ग्रन्थप्रकटीकृतिप्रथितसत्कीर्तिर्विशेषाद्धि यो
विद्युन्माध्यमतः प्रणीतविविधश्राव्यावलोक्यादिकः।।

तत्तादृशस्य रमाकान्तमहोदयस्य मया सह सम्पर्कः दशाधिकसवंत्सरव्यापी। स्वजीवने ''प्लाट्टिन'' श्रीयुक्तं महसमारोहं सम्पादिवता मया मम जामातृद्वयादपि न्यूनवयसः मम पुत्रादीषज्ज्यायसः अस्य तरुणस्य आशीर्वादपुरस्सरं शुभकामनावितरणे न किमप्यसमञ्जसं प्रत्युत प्रहर्षप्रवृद्धिरेव। अन्यत्र प्रकाशिते पद्मदल-चित्रगुंफितशुभकामनारूपे श्लोके[१] ''अस्य सिद्धौ. रसाशंकां मा कार्षी'' रित्युक्तं मया। रसाशङ्कामित्यनेन आशङ्काषट्कं विवक्षितम्। मधुरादीनां रसानां षड्विधत्वस्य लोके दर्शनेषु च प्रसिद्धेः। आशङ्काश्च सिद्धौ एवं स्युर्नाम।

१. यस्सूक्तैः साहितीकारतोषदः सादरेडितः।
सिद्धौ तस्य रसाशंकां मा कार्षीर्मनसाऽ ल्पशः।।
अयं श्लोकोऽस्य ग्रन्थस्य प्रथमप्रसरे द्रष्टव्यः -सम्पादकः ।

यथा अस्तित्वे अर्हत्वे, स्थायित्वे, न्याय्यत्वे, इतरोपकृतिकरत्वे चापि। अथवा कदाचित् सा हठादन्येन केनापि अध्यारोपिता स्यादिदिति वा श्रीमतः रमाकान्तमहोदयस्य सिद्धौ नैकाप्येतासु घटते इति मे सुनिश्चिता मतिः। अस्मिन् अभिनन्दन-महाग्रन्थे मुद्रितानां रचनानां वैविध्यं एतत्सूचकं खलु।

इत्थं नानासाधनाचमत्कृतजीवितस्य अस्य पुण्यश्लोकस्य मया सार्धं प्रथमसम्पर्कः प्रकाशकरूपेण अवर्तत। १९८१-१९८३ संवत्सरेसु मम ''आभाणकमञ्जरी'' ''सदाशयसमुच्चयः'' ''साहित्यकौतुकम्'' रचनात्रितयं ''अर्वाचीनसंस्कृतम्'' इति त्रैमासिके, पृथक् पुस्तकरूपेण च प्रकाशितम्।

अद्यपर्यन्तं मम सम्पर्कः बहुभिः विविधभाषाग्रन्थप्रकाशकैर्जातः किन्तु एषु द्वौ मम स्मृतिमण्डलात् न कदापि तिरोधानं प्राप्स्येत इति मे मतिः। प्रथमः मम ''मलयालम्'' भाषालघूपन्यासस्य प्रकाशकः यो मां १९४० संवत्सरे पञ्चदश रूप्यकाणि सर्वाधिकार-विनिमय-रूपेण-प्रदाय सन्तुष्टमेव चक्रे। किमिति चेत् तदानीं होटल्-भोजनालयेषु आणकत्रितयप्रदानेन सकृत् पर्याप्तं (आमाशयभरणक्षमं) भोजनं प्राप्यते स्म। द्वितीयश्च एषः रमाकान्त-महोदयः यः १९८३ संवत्सरे सहस्रद्वितयादप्यधिकं पारिश्रमिकत्वेन प्रायच्छत्।

मम सत्कथामञ्जरीनाम्नि कथाकाव्यग्रन्थे कस्याञ्चिद्रचनायां ''धन्याः परस्परहितोद्यमनित्यनिष्ठाः'' इति शीर्षकयुक्तायाम् अन्तिमः श्लोक एषः-

साहित्यकृत् सहृदयः पतिरस्य पत्नी
स्वामी च भृत्यनिवहो गुरुदेवशिष्यौ।
बुद्धिप्रकर्षमहिताः श्रमजीविनश्च
धन्याः परस्परहितोद्यमनित्यनिष्ठाः।।

यत् सत्यं सहृदय-साहित्यकारयोः परस्परहितोद्योगसज्जत्वमवश्यमेव श्लाघ्यं तथापि अधुना मन्ये साहित्यकार-प्रकाशकयोः अपि तत् श्लाघामर्हतीत्येव न, अपितु अनुपेक्षणीयमित्यपि वक्तव्यम्। अन्धपङ्गुन्यायस्य निदर्शनभूतमप्येतत्। पुस्तकानां प्रकाशनेन कार्यमवसितमिति को वा मन्येत ? तेषां विक्रय-वितरणादिकं विना

ग्रन्थकर्तुः को वा लाभः पारिश्रमिकरूपः सहृदयरञ्जनात्मकः स्वान्तस्तोषो वा? प्रायः ग्रन्थकारः परहस्ते स्वपुस्तकं दत्वा मूल्यार्थं हस्तं न प्रसारयेत्। पठित्वा अभिप्रायः प्रेष्यः इति उक्त्वा ग्रहीता तं विसर्जयति। ममैषा अनुभूतिः। न कोऽपि सुस्तकग्रहीता मूल्यप्रदानार्थं सन्नद्धो भवति स्वयम्। कतिपयान् संपुटान् अवलोक्य ''आः कियत् सुन्दरम्! शोभनमेव'' प्रभृतीः वाचः समुपन्यस्य पुस्तकं गृहीत्वा गेहं प्रयाति।

नैवं कुर्यात् कुशलः पुस्तकविक्रेता। तस्मात् साहित्यकारस्य अवश्यमेव निपुणस्य कस्यचित् प्रकाशकस्य चतुरस्य ग्रन्थविक्रेतुश्च सहयोगः नोपेक्षणीयः। तत्तादृशः प्रथितयशाः साहित्यकारः रमाकान्तः कथं सफलः प्रकाशकः पुस्तकविक्रेता चाभवदिति प्रश्नः मम मनः असकृत् आलोडयतिस्म।

तस्मात् अनेन लघुलेखेन श्रीमतः ''सव्यसाचिव्यं'' अभिनन्द्य विरमामि। एषः चिरं जीवन् साहित्यान्तरिक्षं स्वप्रभया विमलीकृत्य सहृदयानां निरन्तरतुष्टिं आतन्वानः परिलसतु। अमृता आत्मनः कला वाणीदेवी, ''वाणीविहार'' विहरणदक्षं अक्षीणप्रयत्नलब्धोत्कर्षममुं अपाङ्गकलया अनुगृह्णातु इति च प्रार्थये। शं नो बृहस्पतिर्देवगुरुः स ददातु।

# संस्कृत-तरु का शुक्ल प्रसून

श्री मधुर शास्त्री

विनम्र, तेजस्वी और चिन्तनशील चिरंजीवी को स्नेह देते हुए मन न जाने कहाँ अतीत में खोने को हो गया। जो जैसा होगा उसके संबन्ध में वैसा ही सोचना एक जागरूक नागरिकता का स्वीकृतीकरण है। मूलतः हमारा चिरंजीवी संस्कृत मास के शुक्ल पक्ष का प्रतीक है। आज अनेक असंस्कृत संस्कृत को रूढियों में ग्रस्त करने का घृणित प्रयत्न कर रहें हैं। उस ज्योतिस्रवा संस्कृति की प्रतीक शुद्ध और सुललित साहित्य की आत्मा संस्कृत के सुतरु की जड़ें कितनी गहरी हैं और कितनी विदशता के साथ विस्तृत है- इसका अनुमान कितना कठिन है।

सृष्टि के प्रारम्भ से ही हमारी धरती के हृदय में जो आदर्श संस्कृति का बीज वपन हुआ, वही अंकुरित होकर संस्कृत के रूप में तरुत्व को प्राप्त हुआ। इस तरु के मूल मे आदिकवि से लेकर शिवराजविजय तक अनेक साहित्यिक विधाओं तक के अजस्र धाराओं के समर्पण हैं। वैदेशिक राज्य और वातावरण में भी यह अक्षयमूल तरु अपने अस्तित्व के संघर्ष में लीन रहा। इसी का परिणाम यह है कि आज उस संस्कृत के मौलिक आदर्शों की सुरक्षा में व्यस्त हैं हमारे चिरायुष्य पं० रमाकान्त शुक्ल।

संस्कृत की उक्ति है- "स जातो येन जातेन याति वंशः समुन्नतिम्"। सारे श्लोक को अर्थ देकर प्रस्तुत करना मेरा उद्देश्य नहीं है। मैं भारतीय संस्कृति के संयुक्त परिवार की मिठास इस सूक्ति सें संयुक्त कर कहना चाहता हूँ कि हमारें समाज में वंश का अत्यधिक महत्त्वपूर्ण स्थान है। वंशावली अपने आप में गौरवपूर्ण इतिहास है। इतिहास की प्रगति को गति देना ही तो सामाजिक व्यक्तित्व का उत्तरदायित्व है। इस परम्परा को सुदृढ चारित्रिक बल से विकास देने वालों में शुक्ल परिवार का अपना स्थान है।

मेरा बचपन लौट रहा है। मध्यमा का द्वितीय वर्ष नरवर, विहारघाट से पास कर खुर्जा के राधाकृष्ण संस्कृत कालेज में प्रवेश लेने का मन हुआ। उसका कारण यह था कि बुलन्दशहर में संस्कृत काव्य प्रतियोगिता में आदरणीय स्थान पर प्रतिष्ठित देखा, परम पूज्य ब्रह्मानन्द जी शुक्ल को उनका मुख मण्डल, स्वरचित संस्कृत काव्य का प्रस्तुतीकरण अत्यन्त अन्योन्याश्रित शैली का सम्मोहन लिये हुएं था। परमपण्डित कुबेरदत्त और परमादरणीय ब्रह्मानन्द शुक्ल उस कालेज के स्तम्भ थे। इनकी कीर्ति-कौमुदी में अनेक बार स्नान किया। इसमें मैं अत्यन्त मधुर सुगन्ध वाले शुक्ल प्रसूनों को मुस्कुराते देखा है और देख रहा हूँ और इन प्रसून बंधुओं का आमोद मैं अनुभव

करता रहता हूँ - यह मुझे सौभाग्य प्राप्त है । शिक्षा के क्षेत्र में इन शुक्ल-बंधुओं ने संस्कृत-शिक्षण को गरिमा दी है ।

संस्कृत कविता इन शुक्ल बंधुओं की पैतृक संपत्ति है । संस्कृत की कुछ वराकिनी पत्रिकाओं में अच्छी पत्रिकायें पढने को मिलती हैं । इस साधना- न्यून वातावरण में अर्वाचीनसंस्कृतम्, संस्कृतामृतम् जैसी पत्रिकायें निकल रही हैं । अर्वाचीन संस्कृत को वाणी देने में सदा व्यस्त श्री रमाकान्त शुक्ल अपने काव्य माधुर्य से पिछले दो या तीन दशकों से संस्कृत-सेवा कर रहें हैं । हम संस्कृत प्रेमियों में एक शायद स्वाभाविक न्यूनता है कि हम लोग पुस्तकें खरीदकर नहीं पढते । मै स्वयं को भी इस दोष से मुक्त नहीं मानता हूँ, फिर भी मेरा क्षेत्र संस्कृत मूल से थोड़ा हटकर उसकी बेटी हिन्दी की ओर बढ गया । हम लोग कुछ पत्रिकाओं को खरीद सकतें हैं । यदि प्रत्येक संस्कृत प्रेमी किसी न किसी संस्कृत पत्रिका का क्रेता हो तो इस संस्कृत-तरु के और अधिक पुष्पित होने में और अधिक समय नहीं लगेगा ।

मेरा व्यक्तिगत अनुभव है जब किसी मंच पर कवि के रूप में पं० रमाकान्त शुक्ल को प्रतिष्ठित देखता हूँ तो लगता है मंच पर कवि शार्दूल विराजित हैं । प्रिय रमाकान्त शुक्ल की संस्कृत कविता भारतीयता से भरपूर है । भारत में होने वाले प्रत्येक परिवर्तन के प्रति जागरूकता कवि की राष्ट्रीय सजगता को अभिव्यक्त करती है । वैसे तो शताधिक कविताओं को गिना सकता हूँ परन्तु,'' अहं स्वतन्त्रता भणामि'' यही एक रचना कवि के सचेष्ट व्यक्तित्व की परिचायिका है । एक प्रकार से इसे मैं भारतीय आत्मा का इतिहास कहता हूँ, दूसरी और भावालोचिका भी । यही नहीं, भारत में जिस अनैतिक राजनीतिक वातावरण ने पीढ़ी को क्षुब्ध किया है उसकी पीड़ा भी 'रौति ते भारतम्' में देखी जा सकती है । क्षमा करें; प्रायः हमारे आधुनिक संस्कृत कवि संस्कृत प्रशस्ति लिखकर अपने कर्त्तव्य की इतिश्री कर देते हैं । कुछ ऐसे भी हैं जो प्रकृति या रूढ विषयों को कविता का क्षेत्र बना देते हैं । परन्तु आज आवश्यकता है कि संस्कृत साहित्यकार समाज कीं इस परिवर्तित धड़कन को पहचानें। रूढिबद्धता संस्कृत की प्रगति में बाधक बन जायेगी और अब तक बनी है । मुझे प्रसन्नता है यह कहते हुए, इस कवि ने यदि बादल को पुकारा तो उससे जीवन की उत्तप्त पीड़ा को कहा । जीवन की व्यथा को व्यक्त करने के लिये ही उसने प्रकृति को आलम्बन के रूप में ग्रहण किया । मैं अन्य कवियो के प्रति उदासीन नहीं हूँ- अनेक रचनायें पत्र पत्रिकाओं के माध्यम से देखने में आयी हैं । परन्तु कवि शुक्ल के संबध में चर्चा करते समय इस मूलभूत समस्या को उपेक्षित करना भी भूल होगी। आज भी संस्कृत के माध्यम से भारत को संस्कृति की उज्ज्वलता की ओर प्रेरित किया जा सकता है । हमारे संस्कृत-प्रेमी संस्कारों के रूढिग्रस्त स्वरूप के प्रति अत्यधिक साग्रह है । वे संस्कृत के अतिरिक्त संसार की ओर देखना नहीं चाहते। आवश्यकता है आज संस्कृत को विश्व की ओर देखने की । कविं शुक्ल संस्कृत को

# शुक्ल वंश

श्रीमती रमा शुक्ला

यहाँ डा0 रमाकान्त शुक्ल को केन्द्र में रखकर इनके जन्म वंश और विद्यावंश की संक्षिप्त यथामति जानकारी दे रही हूँ।

**जन्मवंश-** उ0 प्र0 के जि0 मुजफ्फरनगर के चरथावल कस्बे के निवासी वसिष्ठगोत्रीय गौड़ ब्राह्मण स्व0 बद्रीदत्त शुक्ल इनके पडबाबा थे। बाबा-स्व0 माई दयालु शुक्ल। दादी-तुलसा देवी। पिता- स्व0 ब्रह्मानन्द शुक्ल। माता श्रीमती प्रियम्बदा शुक्ला। नाना-स्व0 पं0 गोविन्द राम शर्मा। नानी-स्व0 इन्द्रावती शर्मा। चाचा- स्व0 मित्र सेन शुक्ल चाची-श्रीमती चमेली देवी शुक्ला। मामा-पं0 गंगाधर शर्मा। मामी-स्व0 शान्ति देवी शर्मा। श्वसुर-श्री राजाराम शर्मा। सास-स्व0 कमला शर्मा। सहोदर तथा उनके जोड़े-1. डा0 सावित्री देवी + स्व0 डा0 देवेन्द्र कपिल,2. डा0 कृष्णकान्त शुक्ल + मंजुरानी शुक्ला, 3. डा0 उमाकान्त शुक्ल +डा0 सविता शुक्ला,4. डा0 रमाकान्त शुक्ल+रमा शुक्ला (मैं) 5. विष्णुकान्त शुक्ल + श्रीमती दिनेश शुक्ला,6. श्री लक्ष्मीकान्त शुक्ल + अविवाहित एवं 7. श्रीमती विद्याशर्मा + श्री राजकिशोर शर्मा।8. चचेरे भाई- डा0 मणिकान्त शुक्ल + सुमति शुक्ला। इन सभी के सन्तान का क्रमशः ये है1-कमलेश कुमार कपिल (1), 2- सुधा शर्मा (1), 3- रश्मि शर्मा (2), 4- राका शर्मा(2), 5- मनीषा शुक्ला (2), 6- नीरु शुक्ला (2), 7- पद्मनाभ शुक्ल (2), 8- अरविन्दनाभ शुक्ल (3), 9- सुस्मिता शुक्ला (3), 10- प्रज्ञा शुक्ला (3), 11- चन्द्रमौलि शुक्ल (4), 12- आन्दनवर्धन शुक्ल (4), 13- अभिनता शुक्ल (4), 14- माधवी शुक्ला (5) 15-आशुतोष (5), 16-अलका (7), 17- पीयूष तथा उसका 18- छोटा भाई (7), 19-21 बौबी रवि विट्टू (8)। इनमें 1, 2, 3, 4, तथा 8 संख्यक विवाहित है तथा 1 के तीन पुत्रियां, 2 के एक पुत्र एक पुत्री एवं 3 के एक पुत्र एक पुत्री हैं।

**विद्यावंश-** पिता (स्व0 ब्रह्मानन्द शुक्ल) अक्षरारंभ और यज्ञोपवीत-मंत्रदाता गुरु, अन्य शिक्षक। प्राइमरी स्कूल में श्री हीरालाल शर्मा, श्री मुहम्मद अली, श्री मलखानसिंह, श्री इतवारीलाल। श्री राधाकृष्ण संस्कृत कालेज खुर्जा में विद्यावाचिस्पति पं परमानन्द शास्त्री, पं0 श्रीदत्त शर्मा, पं0 अच्युतानन्द झा, मा0 मुंशीलाल शर्मा तथा पं0 शिवकुमार शर्मा। एन0 आर0 ई0 सी0 कालेज खुर्जा में डा0 अम्बादत्त पंत, डा0 द्वारिका प्रसाद सक्सेना, डा0 सुधीर कुमार गुप्त, डा0 रमेशचन्द्र शास्त्री, आचार्य भीमसेन कौशिक, डा0 शान्ति स्वरूप गुप्त, श्री गौरीशंकर वासिष्ठ, श्री रामबिहारीलाल गोस्वामी, श्री नरेन्द्रकुमार मित्तल, श्री सुरेन्द्र स्नातक, श्री नारायणप्रसाद वाजपेयी, डा0 अम्बाप्रसाद सुमन, श्री सुरेशचन्द्र अग्रवाल श्री महेशचन्द्र गौड़, श्री शिवप्रसाद शर्मा, श्री गिरीश चन्द्र भारद्वाज,आदि। वार्णेय कालेज अलीगढ़ मे डा0 रमेश चन्द्र शुक्ल।शोध निर्देशक- डा0 ओम प्रकाश दीक्षित।

# Special Mention

**Prof. Ramaranjan Mukherji**

'Sanskrit is not laggind behind in the field of creative art also. Contemporary poets and dramatists, critics and artistes are continuing to enrich the bulk of Sanskrit literature with their new thoughts, methodologies and modern techniques. Dr. Mahamahopadhyay Srijib Nyayatirtha who has to his credit farcial plays, numbering half a century is still experimenting on composition of the Wit and Satire-types practically unknown in ancient Sanskrit literature. Unrest in the contemporary life, eagerness of the man to free himself from the trials and tribulations to which he is subjected to in the contemporary society and his aspirations to usher in a new order, the desire of the enternal man to follow the dictates of conscience and observe moral and spiritual values,-all these are being beautifully reflected in the works of morden Poets. Of these 'Poets', special mention may be made of Dr. R.K. Sharma, Professor P.V. Varnekar, Sri Jagannath Pathak, Dr. Ramakanta Shukla, Pt. Nityananda Mukhopadya and Dr. Rebaprasad Dwivedi[1].'

---

1. Dr. Ramaranjan Mukherji, General President, All-India Oriental Conference Thirty-Fifth Session, Gurukula Kangri Vishwavidyalaya, Hardwar. Address of the General President Page No. 18. (November 16, 1990)

# चित्रावली-परिचयः

१. संस्कृताशुलिपि 'श्रीगणेश' पुरस्कारसमर्पणोत्सवे देववाणी – परिषन्महासचिवः रमाकान्तशुक्लः डा० रामकरणशर्माचार्यरमेशचन्द्रशुक्ल – डा० सी० आर० स्वामिनाथ-डा० मण्डनमिश्रैः सह ( २१.२.१९८४)

२. 'श्रीबदरीशतरंगिणी'-'सुरश्मिकाश्मीर'-समुन्मीलनोत्सवे डा०रमाकान्तशुक्लः प्रो० एम० जी० के० मेनन – श्री० सुन्दरराजाभ्यां सह (२१.२.१९८४)

३. अर्वाचीनसंस्कृतविशेषांकविमोचनावासरे रमाकान्तशुक्लः उपराष्ट्रपतिना श्रीरामस्वामीवेंकटरामनमहाभागेन सह (३०.४.१९८५)

४. देववाणी-परिषदो नवमसंकल्पनादिवसे मुख्यातिथिना डा० कर्णसिंहेन सह डा० रमाकान्तशुक्लः (२१.८.१९८४)

५. देववाणी-परिषत्समायोजिते द्वितीयपण्डितराजमहोत्सवे डा० रमाकान्तशुक्लः डा० रवीन्द्रनागर-श्रीमती रमा शुक्ला-डा० आद्याप्रसादमिश्र-डा० मण्डनमिश्रैः सह ( २४.१०.१९८९)

६. मैनपुर्यां देववाणी-परिषद एकादशे द्वादशे च संयुक्तवार्षिकाधिवेशने परिषन्महासचिवः रमाकान्तशुक्लः पं० करुणापतित्रिपाठि-आचार्यश्रीनिवासरथ-डा० मण्डनमिश्रैः सह (२४.१२.१९८९)

७. देववाणी-परिषदः १७ तमे स्थापनादिवससमारोहे डा० रमाकान्तशुक्लः श्रीमती शशिप्रभा गोयल-डा० मण्डनमिश्र-डा० गंगाधरपण्डाभिः सह (१३.१२.१९९२)

८. देववाणी परिषदः १७ तमे स्थापनादिवससमारोहे चतुरमुद्धरे' तिस्तोत्रं गायन् रमाकान्तशुक्लः डा० अविनाश शर्मा-कु० ऋतु शर्मादिभिः सह (१३.१२.१९७३)

९. विशाखापत्तने अ० भा० प्राच्यविद्यासम्मेलनस्य ३४ तमे अधिवेशने प्राकृतजैनविद्याविभागाध्यक्षः डा० रमाकान्तशुक्लः महाध्यक्षेण प्रो० रामचन्द्रनारायणदाण्डेकरेण सह (५.१.१९८९)

१०. विशाखापत्तनस्थ आन्ध्रविश्वविद्यालये समायोजितस्य अ० भा० प्राच्यविद्यासम्मेलनस्य ३४ त्तमाधिवेशनस्योद्घाटनावसरे मंचस्थेषु कार्यकारिणीसदस्येषु रमाकान्तशुक्लः (वामतो द्वितीयः) (५.१.१९८९)

११. विशाखापत्तनस्थ आन्ध्रविश्वविद्यालये अ० भा० प्राच्यविद्यासम्मेलनस्य ३४ त्तमाधिवेशनावसरे समायोजितस्य संस्कृतकविसम्मेलनस्याध्यक्षः रमाकान्तशुक्लः कविभिः सह (६.१.१९८९)

१२. गुरुकुलकाँगड़ीविश्वविद्यालये समायोजितस्य अ० भा० प्राच्यविद्यासम्मेलनस्य ३५ त्तमाधिवेशनस्योद्घाटनसत्रे मंचस्थैः कार्यसमितिसदस्यैः सह रमाकान्तशुक्लः (१६.११.१९९०)

१३. मौरिशसदेशे समायोजिते अन्ताराष्ट्रियसंस्कृतसम्मेलने भारतस्य प्रातिनिध्यं बिभ्रत् रमाकान्तशुक्लः मौरिशसस्य गवर्नरजनरलेन डा. सर शिवसागर रामगुलामेन, भारतीयोच्चायुक्तेन श्रीप्रेमसिंहेन मौरिशसप्रधानमन्त्रिणा श्रीअनिरुद्धजगन्नाथेन च सह (१५.३.१९८४)

१४. अमेरिकादेशे फिलाडेल्फियानगरे पेनसिल्वानियाविश्वविद्यालये समायोजितस्य विश्वसंस्कृतसम्मेलनस्य षष्ठाधिवेशनावसरे तत्रत्यसंग्रहालये रमाकान्तशुक्लः प्रतिनिधिभिः सह (१५.१०.१९८४)

१५. षष्ठविश्वसंस्कृतसम्मेलनावसरे अमेरिकायां फिलाडेल्फिया-संग्रहालये डा० रमाकान्त शुक्लः प्रो० प्रभाकरनारायणकवठेकर-डा० राममूर्तिशर्मभ्यां सह (१५.१०.१९८४)

१६ पेनसिल्वानियाविश्वविद्यालये षष्ठविश्वसंस्कृतसम्मेलनप्रतिनिधिभिः सह डा० रमाकान्तशुक्लः (१६.१०.१९८४)

१७. उज्जयिन्यां कालिदाससमारोहावसरे विक्रमकीर्तिमन्दिरप्रांगणे रमाकान्तशुक्लः डा० सुधाकराचार्यत्रिपाठि-डा० भास्कराचार्यत्रिपाठि-डा० रेवाप्रसादद्विवेद-प्रो० श्रीधरवासुदेवसोहोनीभिः सह ( २४.११.१९८५)

१८. उज्जयिन्यां अ० भा० कालिदाससमारोहावसरे डा० रमाकान्तशुक्लः डा० बाबूलालशुक्ल (स्व०) डा० हरीन्द्रभूषणजैन-डा० नारायण शंकरशुक्ल-डा० रामचन्द्र द्विवेद-डा० सत्यपालनारंगैस्सह (२४.११.१९८५)

१९. उज्जयिन्यां कालिदाससमारोहावसरे कालिदास अकादम्या: भवने रमाकान्त शुक्ल: श्रीमती रमाशुक्ल-आचार्यश्रीनिवासरथ डा० शिवमंगलसिंह सुमन-प्रभृतिभिस्सह (१.११.१९८७)

२०. मेघदूतचित्रमालिकाप्रदर्शन्यां रमाकान्तशुक्ल: डा० भास्कराचार्यत्रिपाठि - चित्रकर्त्री कु० अरुन्धतीवर्तक - श्रीमती रमाशुक्ला-आचार्यश्रीनिवासरथ -डा० सुधाकराचार्यत्रिपाठिभि: सह (४.११.१९८५)

२१. उज्जयिन्यां कालिदाससमारोहे संस्कृतकविसमवाये कवितां पठन् रमाकान्तशुक्ल: (४.१.१९८७)

२२. उज्जयिन्यां कालिदाससमारोहावसरे विक्रमकीर्तिमन्दिरपरिसरे डा० कौशल्या वल्ली-कमला रत्नम्-लीला रथ-श्रीनिवासरथ-डा० गयाचरणत्रिपाठि-डा० बच्चूलाल अवस्थिप्रभृतिभिस्सह सपुत्रकलत्र: रमाकान्तशुक्ल: (३.१.१९८७)

२३. दिल्ली संस्कृत अकादम्या समायोजिते अ० भा० संस्कृत-पत्रकारितासम्मेलने आहूतै: संस्कृतपत्रकारैस्सह डा० रमाकान्तशुक्ल: (मध्ये) (१२.९.१९९२)

२४. दिल्ली संस्कृत अकादम्या आयोजिते अ० भा० संस्कृतपत्रकारितासम्मेलने सुप्रसिद्धक्रान्तिकारिणे श्रीमन्मथनाथगुप्ताय अर्वाचीनसंस्कृतस्य अंकान् समर्पयन् डा० रमाकान्तशुक्ल: (१३.९.९२)

२५. दिल्ली संस्कृत अकादमी - समायोजिते अ० भा० संस्कृतपत्रकारसम्मेलने 'अर्वाचीनसंस्कृत'स्य प्रातिनिध्यं कुर्वन् डा० रमाकान्तशुक्ल: (१४.९.१९९२)

२६. अ० भा० संस्कृतपत्रकारितासम्मेलन - समापनसत्रे संस्कृताकादमीसचिवात् श्रीकृष्णसेमवालात् मुख्यातिथे: श्रीसेवारामशर्मणश्च सम्मानप्रतीकं गृह्णन् डा० रमाकान्तशुक्ल: (१४.९.१९९२)

२७. म० प्र० संस्कृताकादम्यायोजित 'भीमबेटका'-यात्रावसरे संस्कृतकविभिस्सह डा० रमाकान्त शुक्ल: (३०.८.१९९२)

२८. 'मन्दाकिनी'-संस्कृतकविगोष्ठ्याः संचालकपदमलंकुर्वन्-डा० रमाकान्त शुक्लः डा० अविनाशशर्म-कु० ऋतु शर्माचार्यविदानन्द झा-डा० रामकरण शर्मभिस्सह (१६.१.१९९३)

२९. हरिद्वारस्थे गुरुकुलकाँगड़ीविश्वविद्यालये समायोजितस्य अ० भा० प्राच्यविद्यासम्मेलनस्य ३५त्तमाधिवेशनस्योद्घाटनसत्रे 'सुरभारती विजयते'-गीतिं गायन् डा० रमाकान्तशुक्लः (१६.११.१९९२)

३०. आकाशवाण्या आयोजिते सर्वभाषाकविसम्मेलने कवितां पठन् डा० रमाकान्तशुक्लः (२३.१.१९९३)

३१. स्वविवाहरजतजयन्त्यां धर्मपत्न्याः श्रीमत्या रमायाः करकमलाभ्यां सुमनोमाल्यं स्वीकुर्वन् डा० रमाकान्तशुक्लः (२.७.१९९०)

३२. श्रीमत्या नीलिमया (दक्षिणे स्थितया) संयोजिते शुक्लविवाहरजतजयन्त्युत्सवे डा० रमाकान्तशुक्लः धर्मपत्न्या रमया पुत्रैश्चन्द्रमौल्यानन्दवर्धनाभिनवैः कोयलाख्यया श्यालसुतया च सह (२.७.१९९०)

# देववाणीसुवासाय मंगलम्

कवितापारिजाताय, राष्ट्रदेवार्चकाय च।
स्रग्विणीराजराजाय, कविकण्ठीरवाय च।।
बाह्यान्तरपवित्राय, सुहृदामोदमूर्तये।
देववाणीसुवासाय, जगत्पूरितकीर्तये ।।
दिव्यांशेनावतीर्णाय, समुदाराय, धीमते।
गैर्वाणीसम्प्रसाराय सन्नद्धाय कृतात्मने।।
संगठनप्रकृष्टाय, कलासंगमकारिणे।
शिवाय, शिवभक्ताय, वंशोन्नतिकराय च।।
वदान्याय, सुधीराय, धीरोदात्ताय, शोभिने।
लोकोत्तरचरित्राय रमाकान्ताय मंगलम्।।

(-डा० कृष्णकान्तशुक्लस्य)

१९६१ वर्षे एम.ए. (हिन्दी) परीक्षायां सर्वोच्चांकप्राप्त्यर्थम्
आगराविश्वविद्यालयदीक्षान्तसमारोहे कुलपतिः डॉ. रावमहाभागः
रमाकान्तशुक्लाय, स्वर्णपदकं समर्पयति।

हिन्दी–भवनेन २०.८.१९९२ तारिकायां नवदिल्लीस्ये त्रिवेणी–सभागारे
'साहित्यमन्दाकिनीं' समायोजिता यत्र संस्कृतकविरूपेण
डॉ. रमाकान्त शुक्लः समुपस्थितः

# देववाणी-सुवासः (तृतीयः प्रसरः)

## अनुक्रमणिका

# सुरभाषा

आचार्य रामकिशोर शर्मा

अनवद्या हृद्या रमणीया ।
सरसा सुरभाषा पठनीया ॥

अस्यामेव वर्तते सकलं पावनमीश्वरीयविज्ञानम् ।
यजुस्साम ऋगथर्वसञ्ज्ञक श्रुतिरूप श्रद्धेयविधानम् ।
अतो विहाय समं संकोचं सर्वैरियं सदा भजनीया ।
अनवद्या हृद्या रमणीया सरसा सुरभाषा पठनीया ॥१॥

सुखदाः शास्त्रस्मृतयः सर्वा अस्याः कीर्तयन्ति महिमानम् ।
गद्यपद्यचम्पूनामापि त्रिविधं काव्यं गायति गानम् ।
अष्टादशपुराणसंवलिता वाणीयं सततं भणनीया ।
अनवद्या हृद्या रमणीया सरसा सुरभाषा पठनीया ॥२॥

या भाषाः प्रचलन्ति साम्प्रतं भूमौ मानववृन्दप्रसूता ।
तासामियं वर्तते जननी यतः समा अस्या उद्भूताः ।
सुतासमासु तासु भाषासु क्वापि न वागेषा न गणनीया ।
अनवद्या हृद्या रमणीया सरसा सुरभाषा पठनीया ॥३॥

अनयैवाद्य शक्नुमः ज्ञातुं स्वातीतं सर्वथा प्रशस्तम् ।
वैदेशिककल्पितञ्च हेयं कर्तुं मिथ्यामयं निरस्तम् ।
गौरवगिरिं स्वदेशं नेतुञ्चेयं सादरमाश्रयणीया ।
अनवद्या हृद्या रमणीया सरसा सुरभाषा पठनीया ॥४॥

हन्त नेतृभिर्नो नयनानि समुन्मूल्य क्रियतेऽत्र विचारः ।
एकतार्थमस्या अपेक्षितो यत्र तत्र सर्वत्र प्रचारः ।
वैदेशिकसभ्यतासंस्कृति-भाषासक्तिः परिहरणीया ।
भारतीयसर्वस्वरक्षिका चेयं दिवानिशं यजनीया ॥५॥ अन०

# जयति जयति मे भारतमाता

डॉ० प्रभुदयालु अग्निहोत्री

जयति जयति मे माता ।

माता जयते भारतमाता ।।

सर्वं कष्टकरं दुर्दैवं शमयतु सदा विधाता ।

त्वं वेदोपनिषज्जनयित्री

भारतरामायणकवयित्री

त्वमजनिष्ट कृष्णगोपेशं यो गीताया गाता ।।

ज्ञानभानुरादिस्त्वय्युदितः

शूरस्ते सदयः सम्मुदितः

केवलपररक्षार्थमहिंसाव्रती बाणसन्धाता ।।

मौर्यशुङ्गगुप्तादिनन्दिता

हर्षभोजशिवराजवन्दिता

सम्प्रति लोकगणोऽयं सकलस्तव सीमानं त्राता ।।

मातस्तव सम्मानं त्राता ।।

कच्छकामरूपान्तवासिनी

गङ्गाकावेरी- सुहासिनी

चतुर्दिगन्तवहः पवनस्ते मातर्यश-उद्गाता ।।

कालिदासकवितारसमग्ना

सांख्ययोगसाधनसंलग्ना

नालन्दाऽजन्ता मातस्ते श्रद्धाञ्जलिप्रदाता ।।

सावहितः सीमान्तरक्षकः

येन न दंशति कोऽपि तक्षकः

निष्कारणविद्वेषकरस्तव कालमुख प्रति याता ।।

# न चिरेणैवायास्यति कालः

डॉ० प्रभुदयालु अग्निहोत्री

न चिरेणैवायास्यति कालः ।
सत्यं यदा फलति निर्बाधं वृक्षे यथा रसालः ।
लोको भीतिविवर्जितचित्तः
श्रमी यमी न्यायार्जितवित्तः
दहति न जीवनलतां वस्त्रगृहभोजनचिन्ताज्वालः ।
सम-सम्मान-साधनोपेता
नारी, मानी दलितो नेता
विहरिष्यति जनसमवाये स्मितवदनो वृद्धो बालः ।।
स्वार्थसाधिकां शासननीतिम्
धर्मे घृणां, पातके प्रीतिम्,
ईर्ष्याद्वेषदर्पसंवलितां दंक्ष्यति क्रूरो व्यालः ।।
क्षेत्रजातिभाषाभिर्भिन्ना,
संस्कृतिगता दास्यमतिखिन्ना,
नन्दिष्यति, पुनरेव हसिष्यति प्रज्ञा यथा तमालः ।
सर्वे धर्मा वैरविहीनाः
कोऽपि न वोच्चैः, कोऽपि न हीनः,
अवलिप्तो न जनः परवाचं निन्दिष्यति वाचालः ।

# भाषाऽमृतं संस्कृतम्

विद्यावाचस्पति डॉ0 उमारमणझा

(१)

भाषाणां जननी स्मृता दिवि परा वाणी सुराणां शुभा
या लोकद्वयसाधनी खलु नृणां गीर्वाणवाणी सदा ।
सा प्राणैश्च यथा भवेद्ध्रुवमहो राष्ट्रस्य भाषाऽचिरा-
दित्थं संस्कृतरक्षणाय सततं सर्वैः प्रतिज्ञायताम् ।।

(२)

यस्या वाचि समस्तवेदरचना वेदाङ्गशास्त्रैः सह
यस्यां धर्मविचारशास्त्रमखिलं तन्त्राण्यनेकानि च ।
मीमांसादिसमस्तदर्शनमहो गीर्वाणवाण्यां यतः
भाषा साऽस्तु सुकीर्तिता भुवि यथा सर्वैः प्रतिज्ञायताम् ।।

(३)

देशस्यास्य सुसंस्कृतेः प्रतिपदं वाञ्छत्यहो योन्नतिं
या वाणी शुभशङ्करी हितकरी ज्ञानप्रदा श्रीकरी ।
या भाषा दिवि भासते सुरुचिरा भव्यास्तु सा भारते
इत्थं धर्मसमर्थकं सुमधुरं जीयाच्चिरं संस्कृतम् ।।

(४)

लोकाचारविचारसारभरिता यास्ते गिरा स्वर्गदा
ज्ञानानामतुलं निधानमखिलं श्रीसंस्कृतं भूषणम् ।
राष्ट्रस्यास्य सुगौरवं सुमधुरं नः संस्कृतेः रक्षकं
भूयाद्भव्यमिदं नितान्तसरलं दिव्यं वचः संस्कृतम् ।।

(५)

विज्ञानां प्रतिमन्दिरं प्रतिमुखं वागस्तु दैवी परा
भूयाल्लेखनकार्यमप्यतिदृढं वाण्याऽनया केवलम् ।
बालानां प्रतिबोधनं यदि भवेत्सर्वत्र सत्संस्कृते
नूनं राष्ट्रमिदं तु शैलशिखरं गर्वेण सम्प्राप्स्यति ।।

(६)

यज्ञानां सुरभाषयैव सकलं सर्वत्र देवार्चनम्
आर्याणां सकलास्तु षोडंशविधाः संस्काररूपाः क्रियाः ।
यात्रायां शुभकार्यकालसमये चाद्यापि वाण्याऽनया
नूनं सा सुरभारती विजयते भाषाऽमृतं संस्कृतम् ।।

# भारतम्

आचार्यः कामताप्रसाद त्रिपाठी 'पीयूषः'

मनोज्ञशान्तितान्तिभिर्मनुष्यताऽवने रतम्।
श्रयामहे समन्तकश्मलापहं स्वभारतम् ।।

नगाधिपं निधाय मूर्ध्नि यत् किरीटसन्निभम्
चलार्णवेऽपि निश्चलं विराजते यशोविभम्
उरःस्थले लुठन्ति यस्य देवनिर्झरीसमाः
सहस्रशः सदापगास्तरङ्गभङ्गविभ्रमाः
भवानुतापकृन्तनप्रभातमन्दमारुतम्
भजामहे तदर्चनैकभाजनं स्वभारतम् ।

श्रुतिस्मृतिप्रभान्वितं पुराणरश्मिरञ्जितम्
वसुन्धरादिकाव्यकामनीयकेन नन्दितम्
कवीन्द्रकालिदासकाव्यरत्नराशिमञ्जुलम्
तपोव्रतप्रभाप्रसूतपूततत्त्वनिर्मलम्
करोति यत्र देवभारती जनं सुसंस्कृतम्
यजामहे तदाजिभीतिभेदनं स्वभारतम् ।

भिनत्ति यत् स्वगीतया कलिप्रधानकौरवम्
मनोभिरामसूक्तिभिर्व्यनक्ति चात्मगौरवम्
निविश्य यस्य शान्तिलिप्सवस्तपोवनान्तरम्
स्तुवन्ति मोदमन्दिरं परं निसर्गसुन्दरम्
चकास्ति यत्र नूतनत्वसत्त्वगर्भिशाश्वतम्
विभावयामहे तदार्जवान्तरालभारतम् ।

जयन्त्वखण्डराष्ट्ररक्षणैकपक्षपातिनः
क्षयं व्रजन्तु पुण्यमातृभूमिमर्मघातिनः
प्रदेशधर्मजात्यनेकपुष्पमाल्यमण्डिता
धराब्धिभूधरेन्द्रभध्यगा विभात्वखण्डिता
स्वरूपरम्यतानुरूपभव्यभावभावितम्
सभाजयामहे जगद्विभूतये स्वभारतम् ॥

# भारत-वन्दना

आचार्य बाबूराम अवस्थी

जिष्णूनां जनकं महाबलवती- वीराङ्गना-हुङ्कृतं
गर्जद्घोर-जल-स्थलादि-पृतना-पूत-प्रभालङ्कृतम् ।
भास्वद्भीम-भुशुण्डि-टैंक-विशिखाद्यस्त्रैः सदा सङ्कुलं
भूयाद् भूतल-भव्य-भूषणमिदं भूयोऽपि नो भारतम् ।।

यत्कीर्त्या धवलीकृतं त्रिभुवनं पुण्यैर्जगत्पावितं
गीर्वाणैरपि गीयमान-चरितं शश्वत्स्वधर्मे स्थितम् ।
पूज्यं प्राज्यभृतं प्रमोद-भरितं प्रेमास्पदं शम्प्रदं
भूयाद् भूतल-भव्य-भूषणमिदं भूयोऽपि नो भारतम् ।।

समृद्धं सर्व-सौभाग्यं स्वदेशं भारतं वन्दे ।
परं प्रेमास्पदं पुण्यं प्रियं चाऽभा-रतं वन्दे ।।

सदा निर्माण-कर्तारं विकासं दर्शयन्तं च ।
सशक्तं सत्य-हंसस्थं विधातारं विभुं वन्दे ।।

पवित्रं नैमिषं चक्रं हिमाद्रिश्चायुधं यस्य ।
करे पद्मं च कश्मीरस्तमीड्यं माधवं वन्दे ।।

त्रिधा सैन्यं त्रिशूलं यस्य भाले चन्द्रपीयूषम्
समिद्धं रुद्ररूपं तं महामृत्युञ्जयं वन्दे ।।

रिपुं पाकं विनेतुं यः समर्थः सर्वदा शूरः ।
विनिद्रं वीरवेषं तं वरं वज्रायुधं वन्दे ।।

प्रियं ताटस्थ्य-भैषज्यं त्वमोघं साधनं यस्य ।
हरन्तं विश्वरोगं तं ध्रुवं धन्वन्तरिं वन्दे ।।

जनाः कल्पद्रुमा यस्मिन् स्वरो विद्वद्द्विजानां च ।
यशोगन्धः सदा पुण्यो वनं तन्नन्दनं वन्दे ।।

शिवं सर्वैकता-मूलं लसत्स्वाधीनता-छायम् ।
समेषामिष्टदं कञ्चित्कलं कल्पद्रुमं वन्दे ।।

न सेहे यत्पराधीनत्वमुद्यत्तेजसा दीप्तम् ।
स्वतन्त्रं सर्वतन्त्रेषु श्रुतं तद् भारतं वन्दे ।।

प्रवृत्ते स्वार्थ-संघर्षे युयुत्सूनां क्षितौ यस्य
प्रयासो विश्वशान्त्यै शान्तिदूतं भारतं वन्दे ।।

# माता शारदा विजयते

आचार्य बाबूराम अवस्थी

जयति शारदा मा मे वरदा ।

त्रिभुवन-वन्दित-सुन्दर-चरणा

वरट-वाहिनी मा मे शुभदा ।। जयति0 ।।

त्वं मम जीवन-गङ्गा-गतिका

ललित नवल-कल्पद्रुम-लतिका

श्रीपद-कमलं नमति जनोऽयं

प्रणतपालिनी मा मे सुखदा ।। जयति0 ।।

सरस-सुभाव-भरित-जन हृदया

वीणा-ध्वनि-हृत-मोह-बहुभया

कलित-कला-कल-काव्य-विधात्री

परम-पावनी मा सुस्वरदा !। जयति0 ।।

तव करारविन्दं सुखकन्दं

लसतु सदा मम शिरसि शरणदं

त्वं मङ्गलमूर्तिः परमेशा

विजय-दायिनी मा मे मतिदा ।। जयति0 ।।

## स्वरलिपिः

शारदा-वन्दना

तालत्रयम्-मात्राः षोडश-यमन रागः

स्वरलिपिकारः- श्री बृजेन्द्र देव तिवारी

## -स्थायी-

| १ २ ३ ४ | ५ ६ ७ ८ | ९ १० ११ १२ | १३ १४ १५ १६ |
|---|---|---|---|
| | | प सां ध नी | म प ग म |
| | | ज य ति शा | ऽ र दा ऽ |
| प - पमं गरे | ऩी रे सा - | नि ऩी रे ग | ग - ग ग |
| मां ऽ मेऽ ऽऽ | व र दा ऽ | त्रि भु व न | वं ऽ दि त |
| रे - मं प | ग रे सा - | प सां ध नी | मं प ग मं |
| सुं ऽ द र | च र णा ऽ | व र ट वा | ऽ हि नी ऽ |
| प - पमं गरे | नी रे सा - | | |

## - अन्तरा -

| १ २ ३ ४ | ५ ६ ७ ८ | ९ १० ११ १२ | १३ १४ १५ १६ |
|---|---|---|---|
| | | प - मं ग | मं ध मं ध |
| | | त्वं ऽ म म | जी ऽ व न |
| सां सां सां सां | नी रें सां | -नी नी नी ध | नी ध प म |
| गं ऽ गा ऽ | ग ति का ऽ | ल लि त न | व ल क ल्ऽ |
| मं ध नी ध | मं ध प ऽ | सां सां सां सां | सां सां सां सां |
| प ऽ द्रु म | ल ति का ऽ | श्री ऽ प द | क म लं ऽ |
| नी ध नी ध | मं ध प - | | |
| न म ति ज | नो ऽ यं ऽ | प्रणतपालिनी -स्थायी एकवत् | |

शेषाः अन्तराः पूर्ववत् अवगन्तव्याः

# जगदम्बा देवी

## (लोकगीतलये देवीगीतम्)

आचार्य बाबूराम अवस्थी

विपिने वसति विन्ध्ये सुन्दरी जगदम्बा देवी ।

सिंहस्य पृष्ठे माता लसति सुहासा

दासानवति नित्यं मङ्गला जगदम्बा देवी ।।

खड्गं वहति माता दक्षिणहस्ते

दुष्टं दलति रुष्टा चण्डिका जगदम्बा देवी ।।

स्नेहं विशुद्धं माता हृदये दधाति

दयते द्रुतं हि वरदायिनी जगदम्बा देवी ।।

माता नयनयोरमृतं बिभर्ति

श्रेयः कटति विश्वमोहिनी जगदम्बा देवी ।।

ज्योतिर्ज्वलति मातुस्त्रिभुवनमध्ये

जननी जयति जनजीवनी जगदम्बा देवी ।।

विश्वं सृजति माता पाति पुनाति

पापं हरति परमेश्वरी जगदम्बा देवी ।।

मातुः प्रसादोपायं कमपि न जाने

प्रीता भवति भक्ति-भावने जगदम्बा देवी ।।

## स्वरलिपिः

### जगदम्बा -देवीगीतम्

द्रुत कहरवा-अष्ट मात्राः

**स्वरकारः** श्री राजेन्द्र प्रसाद तिवारी ''कंटक''

## स्थायी

| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ | १५ | १६ |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| *सम | | म | म | ग | ग | रे | रे | नी | नी | सा | रे | रे | गरे | सानी | सा |
| विपि | | ने | व | स | ति | वि | न्ध्ये | सुं | द | री | जग | दम् | बाऽ | देऽ | वी |

## अन्तरा

| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ | १५ | १६ |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| | म | म | म | प | ध | प | प | प | म | प | प | प | धप | मरे | रे |
| | सिं | ह | स्य | पृ | ष्ठे | मा | ता | ऽ | ल | स | ति | सु | हा | ऽऽ | सा |
| ऽ | सम | म | म | ग | ग | रे | रे | नी | नी | सा | रे | रे | गरे | सानि | सा |
| ऽ | दा | सा | न | व | ति | नि | त्यं | मं | ग | ला | जग | दम् | बाऽ | देऽ | वी |

शेषा अन्तराः पूर्ववत् अवगन्तव्याः।

# हे मातृभूमे !

-डॉ० शम्भुनाथ आचार्यः

किं साश्रुणी हि नयने तव मातृभूमे
कस्मात्तवाननमिदं ग्लपिताभमद्य ।
केनेक्षितुं तव दिशं कुटिलभ्रुकुट्या
दुःसाहसं नु विहितं मितजीवितेन ॥१॥

को वा मुमूर्षुरधुना तव पुत्रशौर्यं
विस्मृत्य मृत्युजलधौ पतितुं सयत्नः ।
रत्नाकरे नदनदीपयसां प्रपातात्
व्याहन्यते किमपि तस्य न चाल्पमात्रम् ॥२॥

उद्दामशत्रुवनवह्निमतीव चण्डं
क्रोधं ममाद्य खलु वर्धयितुं प्रगल्भम् ।
प्राणा हि कस्य वपुषि प्रतिकारनुन्नाः
सद्यः शरीरमपहाय वहन्त्यधीराः ॥३॥

नित्योत्सवेन रमणीयतरं प्रसन्नं
सौख्यप्रदं तव मुखं विमलं सुमातः ।
अन्तर्गतभ्रमरगुञ्जनमञ्जु रम्यं
कस्मात्सरोजमिव चन्द्रकरैर्विशीर्णम् ॥४॥

सिंहीमिवात्मतनयैः परिरक्षितां क-
स्त्वां गह्वरे समधिगम्य खलः शृगालः ।
स्प्रष्टुं क्षमेत मनसापि विमूढबुद्धिः
स्याच्चेदसौ न यमगेहपथाध्वनीनः ॥५॥

मन्ये तवाननमिदं जितचन्द्रकञ्जम्

ईर्ष्याकषायितधिया मृगलाञ्छनेन ।

पङ्केरुहेण कुटिलेन विमृश्य किञ्चित्

प्रोक्तापवादवचनात् मलिनायतेऽद्य ।।६।।

यस्यास्तुषारधवलश्च नगोऽवतंसः

कन्यान्तरीपमिह वा चरणौ पवित्रौ ।

श्रीद्वारकाप्यथ पुरी च भुजौ यदीयौ

तस्या अनिष्टमपि चिन्तयितुं क्षमः कः ।।७।।

सास्रं तवाक्षियुगलं मलिनं मुखाब्जम्

चिन्तातुरं समभिलक्ष्य च हृन्मदीयम् ।

मामेव निष्क्रियमहो कुरुते हि धिग् धिग्

धिक् पङ्किलं समभिषिञ्च दयाम्बुवृष्ट्या ।।८।।

पुत्रः स एव मनसा वचसा च नित्यं

यः कर्मणा स्वपितरावथ मातृभूमिम् ।

रक्षेदतन्द्रितधिया नितरामजस्रं

शौर्यं यदीयमथवा जनताघहन्तृ ।।९।।

जातेन तेन तनयेन किमत्र लोके

योऽश्रूणि मातृधरणेरपि वीक्ष्य शान्तः ।

यश्चागतं ह्यभिमुखं भुजगं गरुत्मां-

श्चेवाशु हन्ति रिपुमत्र स एव पूज्यः ।।१०।।

यत्ते ह्यरुन्तुदमभूज्जननि त्रिलोक्यां

तद्ब्रूहि मामचिरमेव तवात्मजातम् ।

त्वत्कष्टदो भवतु नाम सुरेश्वरोऽपि

तं चानयामि तव पादसरोजमाशु ।।११।।

यावन्न ते हृदयकष्टकरं बलिष्ठं
शत्रुं निहत्य यमराजगृहं नयामि ।
तावन्न विन्दति मनो मम शान्तिमेतत्
आचक्ष्व मामचिरमेव च तस्य नाम ॥१२॥

यद्वा विवक्षु किमपि स्फुरिताधरं ते
वक्त्रं जलार्द्रनयनद्वितयेन वक्ति ।
शैलावरोधनविभक्तजलप्रपातं
स्रोतश्च गाङ्गमिव भाति च तद्विलक्षम् ॥१३॥

अभ्यर्थितापि विविधं मनसा न चेत्त्वं
विस्रम्भमेव कुरुषे यदपत्यजाते
पुत्रत्वनाम्नि तदिहास्ति यदा कलङ्को
वात्सल्यमेव तव किन्न कषायितं स्यात् ॥१४॥

मौनाश्रयान्नयनयोर्जलदर्शनाच्च
श्वासातिशय्यवशतो मलिनान्मुखाब्जात् ।
चिन्तावशीकृततया हृदयस्य मात -
स्त्वत्सङ्कटं मयि निरावरणं बभूव ॥ १५॥

देशान्तरात् श्रितसपत्नतयापि किंञ्चित्
मातर्भयं तव कृते न तथा मह्यं ।
यावद्यथा तव सुतेभ्य इहाद्य नूनं
स्वच्छन्दता विहतबुद्धिविवेकवद्भ्यः ॥१६॥

नास्तीह साहसयुतः कतमोऽपि देशो
यस्त्वां विघूर्ण्य नयने मनसापि पश्येत् ।
दीपार्चिषि क्व शलभः पतनेऽपि कश्चित्
संरक्षितं स्वजननं मनुते मुमूर्षुः ॥१७॥

ये राजनीतिगणिकावशवर्तिनो, ये

त्यक्तस्वधर्मनिपुणात्मवधूस्नुषाश्च ।

धर्मच्युताः कलहपूरितचेतसो ये

तेभ्यः सदैव भयमस्ति विनाशकारि ॥१८॥

एते कषायितधियो हृतबुद्धिसाराः

स्वार्थावसक्तधिषणाश्च विवेकमन्दाः ।

शप्ता इवेह सहसा नियतिप्रणुन्ना

युद्ध्वा मिथो मृतिपथं गमनाय चोत्काः ॥१९॥

आतङ्कराजनयमिश्रितसम्प्रदाय -

दावाग्निदग्धवपुषस्तव दैन्यभावम् ।

वीक्ष्यापि मातृहृदयस्य न पीडयैते

चिन्तातुराः क्वचन तत्परिहर्तुकामाः ॥२०॥

राज्यश्रियं प्रतिपलं समवाप्तुमेते

सन्त्युद्यताः किमपि कर्तुमहो धरित्र्याम् ।

एषां चरित्रमखिले जगति प्रसिद्धं

लक्ष्म्याप्तिरेव कुलधर्म इवेह तेषाम् ॥२१॥

यत्खण्डनं विघटनं गमनं ह्यधोऽधो

यत्ताडनं प्रपतनं स्खलनं ह्यमीषाम् ।

संलक्ष्य तत् व्यथितचित्ततया महेशं

सद्बुद्धिदानकरणाय सदैव याचे ॥२२॥

गाढं तमः प्रसृतमत्र दिगन्तचुम्बि

गच्चाभितो मनुजदृष्टिविलोपि कृष्णम् ।

मन्ये तदाह्वयति चण्डकरं विशालं

युद्धाय सूर्यमचिरं मृधि नष्टबुद्धि ॥२३॥

एतन्निरीक्ष्य चरितं कृकलासतुल्यम्

अन्तर्निगूढकठिनव्यथयाऽऽत्मजानाम् ।

क्लिष्टान्तरा नयनकोणविलग्नवाष्पा

मौनं व्यथां कथयसीव हृदन्तरस्थाम् ॥२४॥

बालोऽस्मि ते कथमहं कथयामि किञ्चित्

त्वां मातरं तव सुतेषु च कश्चिदेकः ।

साम्यं कराङ्गुलिषु पञ्चसु नैव किंञ्चित्

तत्त्वेऽपि काचिदिह नार्हति कर्तनत्वम् ॥ २५॥

अल्पोऽस्म्यहं लघुतमोऽस्मि तवाङ्गुलीषु

किन्त्वस्मि मानदलने कुशलो रिपूणाम् ।

त्वन्मस्तके तिलकसंरचनां विधातुम्

अङ्गुष्ठनाममहितः प्रभावमि सत्यम् ॥२६॥

सन्त्यज्य शोकमखिलं निजपुत्रजन्यं

विस्रम्भमाशु तनयेऽत्र विधेहि नूनम् ।

आज्ञापय स्व तिलकाय च मां विनम्रं

धृत्वाशिषं शिरसि येन च कर्म कुर्याम् ॥२७॥

मंस्ये तदैव जननं सफलं मदीयं

पद्माननं विकसितं च यदा तव स्यात् ।

मातृप्रसादनविधौ रुचिरस्ति येषां

लोके त एव तनयाः खलु सन्ति धन्याः ॥२८॥

(रचनातिथिः २ अप्रैल १९९०)

# श्रीललितामङ्गलसङ्गीतम्

कविपुण्डरीकः सम्पूर्णदत्त मिश्रः

गणपतिबटुकभैरवीवलिते
वन्दे पदकमले ते ललिते !
इन्द्राणीन्द्रमुकुटमणिदीपितकल्पलताकुसुमाञ्जलिशलिते ।
रतिपतिहासविलासविकासितकविता‌गीतकलाञ्चलफलिते ॥
वन्दे पदकमले ते ललिते ॥ १ ॥

कियदपि करुणं विलपतु जगती द्रवतो ये न जने त्वघदलिते ।
सुखसौभाग्यसुमण्डितपण्डितजीवन्मुक्तिकरामृतकलिते ॥
वन्दे पदकमले ते ललिते ॥ २ ॥

कैतवपालकशठसञ्चालकखलदलदण्डपरे न स्खलिते ।
धर्मपरायणपुरुषवराणां स्वयमुपदेशकृते सञ्चलिते ॥
वन्दे पदकमले ते ललिते ॥ ३ ॥

# हे राधेश्याम !!

डा० वासुदेवकृष्ण चतुर्वेदी

तार-हार-हीरद्युतिरुचिजितकोटिरतीश ।

सुर-नरमुनिपूजितचरण, जय द्वारकाधीश ।।

प्रियमूर्तिं प्रदर्शय हे राधेश्याम !

श्याममूर्तिं प्रदर्शय हे राधेश्याम !

हे राधेश्याम ! आयाहि व्रजबालैः सह

गोचारणमिहाचर हे राधेश्याम ! ।। प्रियमूर्तिम् ।।

हे राधेश्याम ! आयाहि त्वं सखिसार्धं

रासलीलां प्रसारय, हे राधेश्याम ! ।। प्रियमूर्तिम् ।।

हे राधेश्याम ! आयाहि लगुडेन साकं

बाललीलामिहाचर, हे राधेश्याम ! प्रियमूर्तिम् ।।

हे राधेश्याम ! आयाहि गोरक्षणाय

गिरिराजं करे धर, हे राधेश्याम ! ।। प्रियमूर्तिम् ।।

हे राधेश्याम ! आयाहि यमुनाप्रतीरे

चीरलीलामिहाचर, हे राधेश्याम ।। प्रियमूर्तिम् ।।

हे राधेश्याम ! आयाहि रामेण सार्धं

नरशत्रून् विदारय, हे राधेश्याम ! ।। प्रियमूर्तिम् ।।

हे राधेश्याम ! आयाहि श्रीराधया सह

सेवाकुञ्जे विहर त्वं, हे राधेश्याम ।। प्रियमूर्तिम् ।।

हे राधेश्याम ! आयाहि त्वं सखिभिः सह

कालियनागमुपकुरु, हे राधेश्याम ।। प्रियमूर्तिम् ।।

हे राधेश्याम ! आयाहि वृन्दाविपिने
मुरलीमधरे धर, हे राधेश्याम ।। प्रियमूर्तिम् ।।
हे राधेश्याम ! आयाहि पार्थेन साकं
गीतापाठमाचर, हे राधेश्याम ।। प्रियमूर्तिम् ।।
हे राधेश्याम ! आयाहि त्वं भक्तैः सह
भ्रान्तं मे मनो हर, हे राधेश्याम ।। प्रियमूर्तिम् ।।
हे राधेश्याम ! आयाहि रामाश्रमेऽस्मिन्
इष्टं मे प्रपूरय, हे राधेश्याम ।। प्रियमूर्तिम् ।।
निजरूपं प्रदर्शय, हे राधेश्याम
प्रियमूर्तिं प्रदर्शय, हे राधेश्याम
'कृष्ण' कामानिहाभर, हे राधेश्याम !!

# इदमपि दृश्यते विमाने[1]

डॉ० प्रभाकरनारायण कवठेकरः

विमानमारुह्य सुखासनं मे

प्रादर्शि वैमानिकसुन्दरीभिः ।

प्रारब्धलब्धः सुखदः प्रवासः

प्रारब्ध एषोऽस्ति विमानमध्ये ।। १ ।।

आतन्वतीयं सुविधां च तन्वी

व्योमातिथेयी रुचिरं च खाद्यम् ।

मुग्धान् विदग्धानपि मोहयन्ती

मुग्धाऽप्यमुग्धा चतुरा व्यलोकि ।। २ ।।

सा दुर्लभं मद्यमिहानवद्यं

मदालसानिर्मलनीरजाक्षी ।

ददाति याने चषकेऽतिथिभ्यः

पश्यद्भ्य आराच्चलचित्रमत्र ।। ३ ।।

सुखासने ये मदिरातिपानात्

पाने प्रवीणा अपि ते लुठन्ति ।

द्रष्टुं न शेकुर्विनयं च रूपम्

स्वरूपहानिर्व्यसने रतानाम् ।। ४ ।।

मद्यं वितीर्णं मदिरेक्षणाभि-

रासाद्य सद्यो निकटस्थितायाः ।

स्कन्धे शिरः स्थापयतीह कश्चित्

मद्यार्पितानां न भयं न लज्जा ।। ५ ।।

---

१. कवेः प्रथमा विमानयात्रा १९७३ तमे वर्षे समभूत्।

गृहाद् विदूरे वियति प्रवासे
कादम्बरीसेवनशीर्णगात्रः ।
कश्चिद् विपश्चित् प्रतिबोध्यमानः
तां व्योमबालां पुनरीक्षतेऽत्र ॥ ६ ॥

क्रीणाति कोऽयं नवडालरैश्च
मद्यं पुनः पानविधौ प्रवृत्तः ।
एषोऽस्ति नेता 'परमो विशिष्टः'
स चेष्टते वानरबाललीलाम् ॥ ७ ॥

सौन्दर्यपाने निजनेत्रलोभात्
अधः पतन्तोऽन्धसमा नरास्ते ।
सौन्दर्यदृष्टिं न च ते लभन्ते
दृष्टेस्तु सौख्यं खलु जागृतानाम् ॥ ८ ॥

मद्ये रुचिर्नैव यतो मदीया
रसं ददौ सा सुदती फलानाम् ।
भोज्यं च मह्यं नवपक्वमुष्णम्
निरामिषं स्वादुफलादियुक्तम् ॥ ९ ॥

क्रीडाङ्गणाद् विक्रमसूचनार्थम्
बालो यथा धावति मातृकुक्षौ ।
शर्मण्यदेशे ननु फ्रैंकफुर्ते
भूमिं विमानं सुखदामवाप ॥ १० ॥

तत् फ्रैंकफुर्तं सुविमानकेन्द्रम्
गतोऽहमत्राप्यवतीर्य द्रष्टुम् ।
प्रभाकरो पूर्वदिशि प्रबुद्धः
सुपश्चिमं द्रष्टुमिवोऽत्सुकोऽभूत् ॥ ११ ॥

# लन्दनं नन्दनं भुवः

डॉ० प्रभाकरनारायण कवठेकरः

मेघमालामतिक्रम्य निरभ्रगगनान्मया ।

विमानस्थेन दृष्टं तत् लन्दनं नन्दनं भुवः ।। १ ।।

आदौ दृष्टो निवासानां समूहः पादपावृतः ।

क्रमाद् दृष्टिपथं याता नदी रथ्या जनास्तथा ।। २ ।।

क्षणाद् रथ्येषु यानानां मन्दगत्या प्रसर्पणम् ।

दृष्टं तथाप्यदृष्टं तत् पादपेषु समावृतम् ।। ३ ।।

इतिहासप्रसिद्धोऽयमाश्लिष्य तमसां नदीम्[१] ।

'लन्दनं' नाम सेतुर्यः कण्ठार्पितभुजो यथा ।। ४ ।।

सेतोः समीपे तमसा-तीरे प्राकारवेष्टितः ।

राजप्रासाद एषोऽस्ति मौनश्चरति किं तपः ? ।। ५ ।।

'विमानाद्दूरदृश्यः को घटिकाधारको महान्'

पृष्टे मामुक्तवान् कश्चित् 'बिग् बेनाट्टवरो' हि सः ।।[२] ६ ।।

अनेकसेतुबन्धैर्या तमसालिङ्ग्यते सदा ।

प्रक्षाल्य सेतुपादान् सा पुरो याति, न तिष्ठति ।। ७ ।।

'हीथ्रो' नाम विमानानां लन्दनार्थं तलं महत् ।

प्राप्य यानं मित्रतुल्यं प्रसन्नमभवद् भुवि ।। ८ ।।

अवतीर्य तले तस्मिन् विमानं प्राप सुस्थितिम् ।

मनोरथो यथा सिद्धिं कवेः प्राप्नोति वाङ्मयीम् ।। ९ ।।

---

१. Thames River.

२. Tower Big Ben.

# चतुष्टयी

डॉ० रामकरण शर्मा

## आकाशोऽहं विशालः

आकाशोऽहं विशालः शकलविरहितः शून्यशून्योऽप्यनन्तः
क्षोणीनां नृत्यभूभिस्तरणिविधुबुधाङ्गारकैर्दीप्यमानः ।
सर्वेषामेव नित्यं सुगम इह ततः सर्वतोऽहं प्रसन्नः
क्षुद्रैरेभिः कपालैर्घट किमिति ममानन्ततामाच्छिनत्सि ।।

## उदेमि रक्तः

उदेमि रक्तः प्राच्यां रक्तश्चास्तं व्रजाभि वारुण्याम् ।
रक्तं बुभुक्षुभिस्तैर्मनुतनयैरेवमाहूतः ।।
अपरिमितं मम तेजो धित्सन्तीमे न जातु मनुतनयाः ।
रक्तं समस्त-जगतः प्रत्यहमेते पिपासन्ति ।।
अत एव मर्त्यलोके श्रद्धाविश्वासशस्यमरुभूमौ ।
उदेमि रक्ताम्बर इह शये च रक्ताम्बरः सायम् ।।

('सीमा' तः)

## भस्म नाहमनलोऽस्मि शयानः

सुन्दरं यदिह यच्च पुनीते
सर्वमेव यदमुत्र चकास्ति ।
मूलभूतमहमस्मि समेषां
भास्वरं शुचि सनातनमीड्यम् ।।
चालयामि वसुधां च दधामि
सागरानपि बिभर्मि महिम्ना ।

ईरयामि महतो गतिसारान्

शब्दधाम गगनं गमयामि ॥

एकलोऽहमिह तत्र विभामि

भासयामि सकलं सकलात्मा ।

नैव किञ्चिदपि मामतिशेते

पोषणे द्रुतगतौ च समाधौ ॥

शक्तिमानपि शिवाय समेषां

तत्परश्च सुलभश्च भवामि ।

यत्र यो हि मम शक्तिमुपास्ते

तत्र यामि वितरामि च काम्यम् ॥

जानुनी उरसि सन्निदधानाः

शेरते न शिशिरे कृषिबालाः ।

केषुचित् तृणदलेषु चकासत्

स्वापयाम्यहिमताललयैस्तान् ॥

तापयामि शिशिरे च निदाघे

शीतयामि जगतीं स्वसमीरैः ।

वर्षयामि जलबिन्दुचयांश्च

प्रावृषि, क्व न ममास्त्यनुभावः ॥

शङ्करः प्रियतमो मम देवो

रागवानपि नितान्तविरक्तः ।

भिक्षुकोऽपि परमेश्वर एष

यक्षराजसचिवोऽपि कपाली ॥

सेवकोऽहमिह तस्य शिवस्य

मां बिभर्ति स समैरपि भावैः ।

कर्हिचिज्ज्वलति नृत्यति तापैः

कर्हिचिच्चं भसितं स दधाति ।।

तं सदा समरसं परमेशं

सेवितुं यदि शये क्षणमेकम् ।

सैष भूषणमहं त्रिपुरारे-

र्भस्म नाहमनलोऽस्मि शयानः ।।

## अगुरुवर्त्तिका

तूष्णीं शनैः शनैर्गुरु-

रेषाऽगुरुवर्त्तिका चिरं ज्वलति ।

आमोदं विकिरन्ती

शिवं भजन्ती निजं ददती ।।

तन्वी श्यामा सरला

दीपशलाकासखी शुचिः सौम्या ।

कथमियमुज्झितकामा

सर्वानन्यान् प्रमोदयति ।।

न मनसि कोऽपि विकारो

न तनावास्था सुभस्मभूतायाम् ।

शुद्धा बुद्धा मुक्ता

चैषाऽगुरुवर्त्तिका ज्वलति ।।

तनुमप्यतनुविलासैः

कनकैश्चानेकभोगसम्भारैः ।

इतरे बिभ्रति किन्त्विय-

मगुरुतनुं स्वां जुहोत्येव ।।

तूष्णीं शनैः शनैर्गुरु 0

('शिवशुकीय' तः)

# पंचेषु-पंचदशी

डॉ0 जयदेव जानी 'रसराजः'

लसतु लसतु लास्यं लोललीलापतीनां
वदतु वदतु वाक्यं वेणिकावादिनीनाम् ।
जयतु जयतु जैत्रं जातरोमाञ्चगात्रं
सरतु सरतु साह्यं सुस्तनीनां सुहृद्भ्यः ।।१।।

लोलालोकैश्चित्तविकारान् जनयन्ती
हंसीगत्या स्वान्तविमोहं रचयन्ती ।
पीनोत्तुङ्गासक्तकुचाभ्यां विनमन्ती
सेषत्फुल्लस्मेरमुखी मे सविधेऽस्तु ।।२।।

(मत्तमयूरच्छन्दः)

विमलवारिविकासितमुत्पलं
भजति ते नयनद्युतिमुज्ज्वलम् ।
अधरकान्तितिरस्कृतबिम्बता
रदनपंक्तिसुशोभितमुक्तका ।।३।।

मुग्धा मंजुलभाषिणी त्वमसि मे किं कोकिलेनाऽयि मे ?
चित्ताकर्षिकुचोन्नतिस्फुरणिनी किं मे मयूरेण भोः ?
दृष्ट्यानन्दवृषा सुखं जनयसीत्याकाशचन्द्रेण किं ?
फुल्लेन्दीवरलोचनस्मितमुखी त्वं मे वसन्तेन किम् ?।४।

अधरपानमयाचितममृतं
नयनहारितनुर्मम जीवनम् ।
मधुरकोमलदर्शनतर्पितं
हृदयमातनुते तव संगमम् ।।५।।

स्मितयुतं वदनं हरते ध्रुवं
विहगपातजवीचिरुचिं जले ।
तव तदङ्गजभङ्गसुरञ्जनं
जनयते मम हृद्ग्रहबन्धनम् ।।६।।

सुलोचना सुकुन्तलाऽतिचञ्चला यदा गता
तदा सदा तदुत्सुकं मनो ममाऽवदद् भृशम् ।
त्वदङ्गसङ्गरङ्गभङ्गदुःखितं विहाय मां
क्व यासि वक्षि किं न मां बताऽसि चारुहासिनी ।।७।
(पञ्चचामरच्छन्दः)

रथचरणनितम्बा याति मां मूर्च्छयित्वा
स्मृतिमपि विगलय्य कान्दिशीकं करोति ।
हृदयकमलवीथ्याः पीडयित्वा समांशान्
सरभसमनुरक्तं याति दूरं किमङ्गात् ? ।।७।।

पयोधराक्रान्तसुबद्धकेश-
कलापके पृष्ठगतं कृतेऽपि ।
सोऽयं हि धूर्तस्तरसा समैति
तृषाभिभूतस्तरुणीस्तनान्तः ।।९।।

धरणी धरणाद् रमणी रमणात्
नलिनी प्रणयाद् हरिणी हरणात् ।
जननी भरणाद् भगिनी स्मरणात्
सखि ! संस्मरणे पटुता विहिता ।।१०।।

स्मरणं शरणं करणं सुखदं
- सुरतं रमणं विरतं मरणम् ।
तवकं सकलं जनयत्यधुना
मयि जीवनजालमनन्तयुगम् ॥११॥

(तोटकच्छन्दोद्वयम्)

नेतुं मे हस्तयुग्मे तव करकमलौ हृद्गतो मेऽभिलाषो
रन्तुं कृष्णे घने ते नयनसुखकरे कुन्तले मानसेच्छा ।
पातुं सन्तोषदां तां मधुरमदसुधां तेऽधरस्यास्ति वाञ्छा
हंहो कीदृग् भ्रमोऽयं जगति हि विदितं याचके बुद्ध्यभावः॥१२॥
स्मितजिताखिलनाकवराङ्गना
नयनचञ्चलताजितमीनता[१] ।
अनिलवेल्लितवल्लरिबालिका
वितनुतां तनुतां विरहार्चिषः ॥१३॥
हृदयाधिष्ठिते[२] नूनं सर्वं दुःखं गमिष्यति ।
मयि बाले[२] कुरु स्नेहं मानसोल्लाससङ्गिनि[२] ॥१४॥
केशान् मण्डयिता पयोधरतटीसंमर्दको वीक्षणे
यः प्रच्छादयिता सरागहृदयं कामज्वरात् रक्षिता ।
नीवीं विश्लथकृन्नितम्बतरलो जंघायुगं मर्दिता
ऊरू ताडयिता प्रियासुखकरो भूयात् करोऽयं सदा ।१५।

---

१- मीनानां समूहः इत्यर्थे तल् ।

२- पुंलिंग-सप्तम्येकवचनानि स्त्रीलिंग-संबोधनैकवचनानि च ।

# वत्स धन्यतरो भूयाः[१]

पं० टी० वि० परमेश्वर अय्यरः

बालः स्वायुषि नाब्दपूर्तिमकरोत्पित्रोर्मृतिग्रस्तयो-
र्वृद्धिं प्राप स मातुलस्य च पितामह्याश्च कारुण्यतः ।
कौमारे पठितावदर्शितरुचिः क्षिप्तो मुहुर्दण्डितः
सक्रोधेन, दयान्विता तु जरठा संवर्धयामास तम् ।। १ ।।
कैङ्कर्यं कृतवत्यजस्रमपि सा सम्मार्जनाद्यं श्रमाद्
गेहेषु स्मयदुष्टनिर्घृणहृदां भृत्यल्पतृप्यन्मनाः ।
पूपाद्यैर्दधिदुग्धसान्द्रमधुरैः सन्तर्पयन्ती मुदा
पौत्रं तं विकचन्मतिः स्वयमथो तीव्रां विषह्य क्षुधाम् ।। २।।
शश्वद् दुर्जनसंगतिप्रियतया त्यक्तालयः संश्रयन्
लुण्टाकं कमपि क्रमेण विपुलं सम्पाद्य वित्तं खलः ।
स्मृत्यारूढपितामहीप्रियकथः संप्राप्य तत्सन्निधिं
नम्रः संप्रणनाम तत्पदयुगं रत्नार्पणालोकितम् ।। ३ ।।
तप्तेवाग्निकणेन दष्टचरणेवाहीन्द्रदन्तार्पणाद्
विद्धेवोग्रविषान्वितैश्च युगपच्छल्यैः शिताग्रैस्तदा ।
सोद्वेगा चकिता च वृद्धवनिता साऽभ्यूह्य तथ्यं परं
निर्वर्ण्यामुमवज्ञयाऽश्रुकलुषा तस्थाववष्टब्धवाक् ।। ४ ।।
वाचां प्राप्य ततः कथञ्चिदपि सा सामर्थ्यमुच्चारणे
प्रब्रूते वचनं स्म शुद्धहृदयेनाकृत्रिमस्फूर्तियुक् ।
खेदक्लिन्नकरद्वयोपहृतया सन्तर्प्य मां श्राणया
भूया धन्यतरो हि वत्स न पुनश्चौर्याप्तरत्नप्रदः ।। ५ ।।

---

(१) वृत्तान्तपत्रस्थात् वार्ताशकलात् इतिवृत्तम् उपादाय रचितं लघुकथा-काव्यम् (रचनाकालः 11-3-1984)

# बस्यात्रिकाणां कृते

पं० टी० वि० परमेश्वर अय्यरः

टिप्पण्यः कतिचिन्मयाऽत्र विधिवद् बस्यात्रिकाणां कृते
दीयन्ते स्थिरबुद्धिसंस्कृतिपरैर्ध्येयाः सदा सादरम् ।
यात्रा येन भवेदशेषजनतासौविध्यदा वारित-
क्लेशा चाप्यनुवासरं गतमिथःसंघर्षशीर्षामया ।।१।।

यात्री चेदनुशिष्टिपालनपरः संवाहकः संयतः
स्मेरास्यः सहयोगदानचतुरः कर्तव्यनिष्ठः सदा ।
मान्द्यं शैघ्र्यमथापि वाहनगतौ जह्यात् स चेच्चालको
यात्रा सौख्यमवाप्नुयाच्च जनता मुक्ता हि दुर्योगतः ।।२।।

सौरभ्यान्वितपुष्पसञ्चयगता यद्वद्विरेफव्रजाः
पूयन्मांसवसादिकेषु मुखरा लग्ना यथा मक्षिकाः ।
अकीर्णान्नकणेषु बुक्कनपराः कौलेयवर्गा यथा
नो प्रीत्यै समजा मिथः कलहिनो बस्यानपार्श्वस्थिताः ।।३।।

याऽहंपूर्विकयाऽधिरोहणकृतिः सम्मर्दविक्षोभयुक्
स्त्रीवृद्धादितिरस्क्रिया कलुषिता हेया सुभद्रैर्नृभिः ।
छिद्रेऽनर्थबहुत्वमेव भविता भ्रष्टा मतिश्चेद् ध्रुवं
नाशः स्यादवधानरिक्तिरुपतापोद्भूतिहेतुर्महान् ।।४।।

एकस्याम्बरमाशु पाटितमभूद् भस्त्राऽपरस्याहृता
दीना काचन संस्खलत्पदयुगा भूमौ पपाताबला ।
विद्धांगश्चरणत्रशंकुनिवहैस्तस्या रुरोदार्भकः
कश्चित् ताडितमस्तकश्च लगुडैर्वृद्धस्तपस्वी मृतः ।।५।।

लोको भिन्नरुचिर्भिदाढ्यफलभुग्भिन्नोक्तिकर्मादिकः
प्रज्ञादृष्टिरविक्लवस्थिरमतिः कल्याणभाक् सन्ततम् ।
अस्योदाहरणानि पञ्चषमितान्येव ब्रवीम्यत्र चे-
न्न्यूनत्वं न च शङ्कनीयमपराण्यूह्यानि विज्ञानिभिः ।।६।।
निष्क्रान्त्यर्थमंथ प्रविष्ट्युचितमित्यस्ति द्वयं द्वारयो-
र्बस्याने ख़लु किन्तु वृद्धवनितापंग्वन्धरुग्णादिकान् ।
उद्दिश्याधिकृतैः कृतोऽयमपवादोऽमी यथेच्छं विश-
न्त्वित्यत्राद्य जनैर्महानपनयः कश्चित् समुत्थापितः ।।७।।
मान्यः कस्य विधिः करस्थलगुडः स्वामी महिष्याः स्वयं
दाक्षिण्याम्बुनिधिः सुचेष्टितरुचिर्मूर्खीकृतः कश्मलैः ।
कस्येदृग्व्यवहारजा भवति भो तुष्टिश्च शान्तिस्तथा
लाभो हानिरिति द्वयस्य गणना कस्यास्ति नो कस्य च ।।८।।

(वस्तुतः रचनेयं न संपूर्णा । पञ्चषानपरान् विरच्य श्लोकान् समाप्तिं प्रापणीयेति कवेर्निश्चयः । रचनाकालः ७-९.१०.१९९०)

# किं भ्रष्टबुद्धिर्न करोति लोके[1]

पं० टी० वि० परमेश्वर अय्यरः

द्वैचक्रिकं वाहनमप्रयत्नमास्थाय तच्चालयितुं सुखेन ।
स्वासां प्रियाणां पुरतः सखीनां कन्याथ काचित् स्पृहयांबभूव ॥१॥
आरुह्य तच्चालनक्लृप्तयत्ना शशाक किञ्चिन्न शशाक किञ्चित् ।
दूरं गता वाहनसंस्थिता सा हन्तेयमीषत्स्खलिता पपात ॥२॥
दन्तौ पतन्त्याश्च किशोरिकाया मल्लीमतल्लीमुकुलोपमानौ।
अत्रुट्यतामश्मविघट्टनेन चार्द्रीभवन्तौ क्षतजोद्गमेन ॥३॥
संभावितारम्यतया मुखाब्जे यावत्यभूच्चेतसि वेदनाऽस्याः ।
न तावती देहगतव्रणोत्था रुचिर्विभिन्ना ननु हन्त लोके ॥४॥
तां "भग्नदन्ते" त्यसकृद्वदन्त्यः सुस्मेरमुख्यश्च तदीयसख्यः ।
अद्वेपयन् सान्द्रकुतूहलिन्यो विचक्रिरे विक्षतचेतसं च ॥५॥
रुष्टौ भृशं तज्जननी पितापि सन्तर्ज्य चेत्थं स्फुटमब्रुवाताम् ।
"पितामही सापि समग्रदन्ता वैधेयचेष्टा तव कीदृशीयम् ॥६॥
मूर्खः स कस्त्वां वरयेदिदानीं संभग्नदन्तां वचसि स्खलन्तीम् ।
कन्याजनानामुचितं न चेदमुच्छृङ्खलं कुत्सितचेष्टितं ते"॥ ७॥
श्रुत्वेत्युपालम्भशतं वराकी सखीजनादाप्तजनाच्च शश्वत् ।
दुःखं सनिर्वेदमवाप्य खिन्ना प्रभ्रष्टबुद्धिश्च बभूव सद्यः ॥८॥
मृत्तैलसिक्तानि विधाय वासांस्युद्विग्नचित्ताथ विविक्तदेशे ।
उद्दीप्य भस्मीकृतसर्वगात्रा चकार बन्धून् व्यथितान्तरङ्गान् ॥९॥
जीवन् वर्षशतादपि स्थिरसुखं मर्त्यः समेयाद्ध्रुवं
शङ्कां नार्हति कर्तुमत्र विषये यद्दर्शनज्ञोदितम् ।
मायासंधितमात्मनश्च वपुषो बन्धं न कश्चिन्नरो
नारी वार्हति भूतले विघटितं कर्तुं कदाचित् क्वचित् ॥१०॥

---

१. पूर्ववत् समाचारपत्राधमर्ण्यकलितम्। रचनाकालः १४-३-१९८४ ई०

# मन्दाक्रान्ते![1]

डॉ0 दीपकघोषः

निश्चिन्तात्मा चिरयुववधूस्तृप्तचित्ता चिराय
वक्षोमग्ना कविकुलपतेः शोभसेऽनन्यभोग्या ।
नासीन्न स्यादपरपुरुषे विन्दुमात्रं स्पृहा ते
मन्दाक्रान्ते त्वमयि भुवने नूनमेवासि धन्या ।। १ ।।

मन्दं मन्दं प्रथमचलनं यामि वा यामि नेति
पश्चान्मन्ये द्रुतलघुपदाऽऽ क्रान्तभीतासि मार्गे ।
द्वैधीभावं भयमपि हृदि स्वीयशक्त्या क्रमेण
जित्वा वामे तदनु चलसे मन्दतातूर्णताभ्याम् ।। २ ।।

पादक्षेपः श्रुतिसुखयतिश्चित्तहारी चतुर्थ-
स्तास्मात् षष्ठोऽपि च तव ततः सप्तमश्चातिचारुः।
नैशे मार्गे प्रियजनमभि प्रेममूढेऽभिसार -
मुत्प्रेक्षे किं सभयपुलका यासि मञ्जीरशिञ्जम्।। ३ ।।

मन्दाक्रान्ते किमसि चलितुं मेघदर्शे प्रवृत्ता
वर्षारम्भे नभसि सहसा बर्हिणीव प्रमत्ता ।
केकोत्कण्ठा चलतनुमनाः कम्पयन्ती कलापं
नृत्यारम्भो भवतु च ततस्ते कवेस्तालगीतैः ।। ४ ।।

को वेत्तीह प्रणयसुभगा यक्षकान्ता नु वा का
तस्याः किं स्याद् वसतिरलका सत्यतो वेत्ति को वा ।
मन्दाक्रान्ते त्वमसि तु कवेः केवलैकप्रिया हि
वाणीरूपा रसमयतनुर्भावगम्भीरचित्ता ।। ५ ।।

---

१. (महाकविकालिदासस्य प्रियतमां छन्दोमन्दाक्रान्तामुद्दिश्य छन्दोमन्दाक्रान्तया विरचिता, ,१९८९-उज्जयिनीकालिदाससमारोहे कविसम्मेलने पठिता च)

कस्तंत् सत्यं वद मधुरिके शक्नुतेऽपह्नवाय
जानास्येकं त्वमपि च भवे कालिदासः कविः सः ।
धन्यासि त्वं कविरपि तथा धन्य एवेह विश्वे
प्रेक्षन्तां वां प्रणयममरं सस्पृहं सारशून्याः ।। ६ ।।

मन्दाक्रान्ते प्रणयिणि कवेः प्राणभूतेऽद्वितीये
भावच्छन्दोरससुललिते प्रार्थनैका ममैषा ।
दृष्ट्या धन्यीकुरु जनमिमं त्वत्कृतेऽपेक्षमाणं
दीर्घं कालं सकृदपि भुवां मोक्षलाभात् तु पूर्वम् ।। ७ ।।

# गज़ल-गीती

डॉ0 लीना रस्तोगी

कियत्कालिकोऽयं प्रवासो न जाने
क्व विश्रामगर्भो निवासो न जाने ।
सङ्कुलेयं धरा मानवानां गणैः
क्व लुप्तो ''मनुष्यत्व''-वासो न जाने ।
चीत्कृतानि श्रुतान्यट्टहासाः श्रुताः
क्व सुखदः स्वराणां विलासो न जाने ।
विश्लथा ह्यत्र शब्दा विकीर्णाः पथि
क्व संश्लेषसारः समासो न जाने ।
कैक्टसानां गणैर्व्यापृतेयं वनी
क्व तुलसीदलानां विकासो न जाने ।
इयं शीर्णपर्णा लता माधवी ! हा !
वसन्ते कथं माघमासो न जाने ।।

(२)

साम्प्रतं नवविचारधारा
संस्कृतिर्नवा, प्रगतिसारा ! ।।ध्रु0।।
पञ्चवर्षदेशीयकुमारः
पृष्ठे विंशतिपुस्तकभारः !
भारवाहिनी विद्या फलति ''ट्यूशन'' व्यापारा ।।१।।
यन्त्रचालिता मानवीयता
सङ्गणको ननु मनुजविजेता !

''कैल्क्यूलेटर''-गणितैर्विजिता मतिर्निराधारा ।। २ ।।

न मातृभोग्यं, न बन्धुभाज्यं

''फ्लॅट'' संस्कृतेरिदमधिराज्यम् ।

एकच्छत्रा प्रभुता विलसति विगलितपरिवारा ।। ३ ।।

गृहसज्जायां सर्वे दक्षाः

शुष्कविटप (Dry decoration)- भूषिताश्च कक्षाः ।

वृद्धाश्रममीरिता किन्तु सा प्रसूः शुष्कसारा ।। ४ ।।

स्वयं सीमिता इमे प्रबुद्धाः

स्वे स्वे सद्मनि जना निबद्धाः ।

नूत्नोपस्करसुसज्जितेयं ''गृह''नाम्नी कारा ।। ५ ।।

उपवनगमनं प्रातः सायम् ?

न हि न हि ! अधुना दूरदर्शनम् !

विश्वव्यापिनी मञ्जूषेयं माया साकारा ।। ६।।

# कीदृशी तव बन्धुतेयम् ?

डॉ() शम्भुनाथ आचार्यः

कीदृशी तव बन्धुतेयम् ?
कीदृशी तव बन्धुतेयम्
प्रतिदिनं यो जन्मना त्वं
मया सह खेलामकार्षीः
दुःखसुखयोः कल्पनायाम्
एकतावचनं ह्यधार्षीः
त्वां विना मयका कदाचित्
मां विना त्वयका कदाचित्
नाशितं चान्नं, निपीतं
नो पयोः निभृतं कदाचित्
आवयोः सुस्नेहक्षीरे
कीदृशी कपटाम्लतेयम्
कीदृशी तव बन्धुतेयम् !
शैशवं दूरं गतं न-
श्चागतं नवयौवनं नः
अर्जितं ज्ञानं धनं बहु
जायतेऽत्र समर्चनं नः
अम्बरे, गगनेऽन्तरिक्षे
धूयते यशसः पताका

आञ्जनी रेखां नयनयोः
अर्पयत्यचिरं शलाका
अञ्जनेन कृते परं हा
कीदृशी नयनान्धतेयम्
कीदृशी तव बन्धुतेयम् ?
बन्धुरेव न बान्धवं रे
परिचिनोति महाप्रमत्तः
बन्धुरेव स्व बान्धवं रे
हन्ति स्वार्थ-सुरा-प्रमत्तः
सुरा, सुन्दरिका, सुवर्ण
दुर्बलत्वं खलु नृपाणाम्
आत्मपूजामात्रमेषां
केवलं लक्ष्यं सुराणाम्
सभ्यतायुक्तेऽपि लोके
कीदृशी वद नग्नतेयम्
कीदृशी तव बन्धुतेयम् ?

( रचनातिथिः ५ अप्रैल १९९० )

# चन्द्रसरोवररजनीगीतम् ।

कविपुण्डरीकः सम्पूर्णदत्त मिश्रः

वन्दे गोवर्धनोपान्ते मार्गं तं सिकतामयम् ।
यत्र राधायते कृष्णो राधा कृष्णायते स्वयम् ।।

जनयति मोहं यत्र पपीहा[१]
विकसति भोगविलाससमीहा
द्रुतमपसरति सरति रजनी हा! ।
मधु मदयन्ती मधुपवने ।
चन्द्रसरोवरपार्श्ववने ।
या प्रकृतिर्नहि सा भवने ।।१।।

यत्र रहसि रेमे वनमाली
यस्य कलालुलिता ललिताली
रमणसुखाकर्षितवनिताली
तमनु ननर्त रासवने ।
चन्द्रसरोवरपार्श्ववने ।
या प्रकृतिर्न हि सा भवने ।।२।।

धन्यमहो ! गोवर्धनशोभा
व्याप्तवसन्तसुधाकरगोभा
सृतरमणीपरिरम्भणलोभा
भणिता भागवतस्तवने ।
चन्द्रसरोवरपार्श्ववने ।
या प्रकृतिर्न हि सा भवने ।।३।।

---

१. (न चातकपर्यायो हिन्दीभाषानुसारमपितु छायातपार्थे मत्कृता नवशब्दसृष्टिः)

कोकिलकूजितकलितकषाया
सदलरसालमुकुलदलमाया
बहलकदम्बकदम्बजछाया
सन्ना खिन्नजनोल्लसने ।
चन्द्रसरोवरपार्श्ववने ।
या प्रकृतिर्न हि सा भवने ।।४।।

यमुनातीरतमालतमोगा
राधाकृष्णसंगकृतभोगा
प्रणयपरायणताधृतयोगा
सङ्गीता संस्कृतकवने ।
चन्द्रसरोवरपार्श्ववने ।
या प्रकृतिर्न हि सा भवने ।।५।।

निकटे वहति मानसी गङ्गा
तटरमणीकवसतिबहुरङ्गा
विटपविराजितविविधविहङ्गा
तृप्तिमुदीरयतीव जने ।
चन्द्रसरोवरपार्श्ववने ।
या प्रकृतिर्न हि सा भवने ।।६।।

काचन राधाकुण्डकिशोरी
तद्रसनायकचन्द्रचकोरी
यदि समुपैति पुरो मम गोरी
किं भविता प्रथमे मिलने ?
चन्द्रसरोवरपार्श्ववने ।
या प्रकृतिर्न हि सा भवने ।।७।।

वरमुपलब्धं दिवसनिशानां
पादपपवनजलदलतिकानां
भुवि सर्वत्र सुखं सलिलानां
परमिदमन्यदिवात्र घने ।
चन्द्रसरोवरपार्श्ववने ।
या प्रकृतिर्न हि सा भवने ।।८।।

वरमहमस्मि सुन्दरीदासः
सकुलं भरतपुरे कृतवासः
इत आयामि यदाहमुदासः
किमपि समाधातुं भजने ।
चन्द्रसरोवरपार्श्ववने ।
या प्रकृतिर्न हि सा भवने ।।९।।

# वसन्तमदगीतिका

कविपुण्डरीकः सम्पूर्णदत्त मिश्रः

मधुवनमुद्दीपयति वसन्तः ।
धरादिवं धूपयति वसन्तः ।
प्रजामुदं दीपयति वसन्तः ।।
मधुवनमुद्दीपयति वसन्तः ।।१।।
प्रकृतिसखीमुखमद्य समृद्धं
वरवातैर्वीजयति वसन्तः ।
मानससारितसुखसन्तानं
तन्तुवितानं वयति वसन्तः ।
मधुवनमुद्दीपयति वसन्तः ।।२।।
नवमन्दारकुसुमरसगन्धै-
र्वनदेवीरर्चयति वसन्तः ।
माकन्देषु मधुव्रतवृन्दं
मकरन्दैस्तर्पयति वसन्तः ।
मधुवनमुद्दीपयति वसन्तः ।।३।।
सद्मनि सद्मनि पद्ममुखीनां
मादकतामुद्वहति वसन्तः ।
युवतीसङ्गतिबद्धरतीना-
मनुरागं वर्धयति वसन्तः ।
मधुवनमुद्दीपयति वसन्तः ।।४।।

सद्योमिषितमुकुलमुदितानां
पतिरतितल्पपतितलुलितानाम् ।
मारुतमत्तमधुपपिकविरुतैः
परिचर्यामाचरति वसन्तः ।
मधुवनमुद्दीपयति वसन्तः ॥५॥
अस्ति जनः कलिकर्मकलापी
कल्मषलिप्तमना अपलापी ।
पुनरपि मनो मन्मथाधीनं
विदधति मधुविटपा विकसन्तः ।
मधुवनमुद्दीपयति वसन्तः ॥६॥
विपुलपुलकपूरितबुधवर्याः
साधुविवेकविहितगृहचर्याः ।
सम्पादितबालासुसपर्याः
सेवन्ते संसृतिमिह सन्तः ।
मधुवनमुद्दीपयति वसन्तः ॥७॥
गद्गदगीतगदितगतिकानां
मृदुलमृदङ्गमथितमतिकानाम् ।
स्वरसङ्गीतसभारसरतिकाः
स्वागतमीहन्ते विहसन्तः ।
मधुवनमुद्दीपयति वसन्तः ॥८॥
मोहकमङ्गलमहमहितानां
नवयौवनसौरभसहितानाम् ।
मदमायामन्थरमिथुनानां
मदनावर्जनजनित उदन्तः ।
मधुवनमुद्दीपयति वसन्तः ॥९॥

मन्त्रसाधनारतमतिमन्तः
सफलपराक्रममहसि सरन्तः ।
भोगैरात्मकुलं सुखयन्तः
सन्ति वसन्ते कति भगवन्तः ?
मधुवनमुद्दीपयति वसन्तः ।।१०।।

सत्त्वसम्पदाकुलकलिताभिः
स्वाभिमानसाधनललिताभिः ।
कण्ठे प्रणयवेगवलिताभी
राजन्ते सुभगा गृहवन्तः ।
मधुवनमुद्दीपयति वसन्तः ।।११।।

चैत्रचन्द्रचुम्बितसञ्चरणाः
कम्रकपोलकषायितकरणाः ।
स्वयमाश्लेषनिवेदितवरणाः
वरयन्तीह रहसि विधिवन्तः ।
मधुवनमुद्दीपयति वसन्तः ।।१२।।

दिवसनिशाः स्वव्यतिकररमणा
वीतशीततातापाक्रमणाः ।
कल्ये कल्यजनेष्टभ्रमणाः
काशन्ते वसतिषु बहिरन्तः ।
मधुवनमुद्दीपयति वसन्तः ।।१३।।

राधाकुण्डनिशानिशिताक्षाः
सक्ताप्सरःकुण्डसुकटाक्षाः ।
कुञ्जालोकमुरसि रसयन्ते
श्रीगिरिराजपरिक्रमवन्तः ।



मधुवनमुद्दीपयति वसन्तः ।।१४।।

# तव जम्भे दध्मः

कविरत्नम् ओम्प्रकाश ठाकुरः

इतिहासगवाक्षादवलोके

मानवतेऽहं ते करुणकथाम्

अश्रुस्नातां रुधिरैः सिक्ताम्

आर्तस्वरवर्णैः परिरचिताम् ।

त्वमरोदीर्धर्मधराऽपि यदा

जाता बान्धवशोणितशोणा

भारतयुद्धे सर्वेऽभूवन्

आहतकायाः क्षोण्याः कोणाः ।

जौहरदाहैः सम्प्रत्यपि ते

मानवते मानसमभितप्तं

स्वाधीनतार्थसंग्रामेषु

किं किं सुभगे ! तव नो लुप्तम्

अवहन् शोणाः सरितः परितो

नेत्राणामविरलजलधाराः

कतिधा नामज्ञत् तत्र जगत्

के नाव्यथन्त कृतचीत्काराः ।

कोऽप्युन्मादः प्रकटीभूतो

भूयो भूयस्त्वां रोदयते

निजरुधिरपिपासाशमनार्थे

हिंसाताण्डवमायोजयते ।

दानवबलसमुदयसमुपेता

तनया स्वार्थस्य युयुत्साऽऽख्या

विध्वंसकरी निर्माणानां

सहचरी कुटिलपथयानानाम् ।

त्वं वदसि कथां के श्रोतारः ?

श्रोतारो नाप्यवबोद्धारः

वृद्धिं यातीयं व्यथाकथा

भुवि भाति यथा किल बृहत्कथा ।

दहने दग्धा भूयो भूयो

लोके प्रचारमुपयातीयं

गीता-रामायण-सप्तशती -

प्रख्या प्रपठ्यते चानुदिनम् ।

बहुभिर्वाचकवृन्दैरनिशं

पठिताऽपि न गच्छत्यवसानं

श्रावं श्रावं पाठं पाठं

क्रन्दति करुणं हृदयं ग्लानम् ।

हे सृष्टिविधातर्जगदीश्वर

मानवताभाग्यलिपिर्भवता

दम्भोलिघटितया लेखन्या

मन्ये करुणामष्या लिखिता ।

उन्मादो भाषा-धर्मादिक-

कञ्चुकधारी किं नातनुते

अम्भोवेगः सरितां कूलं

तद्वत् सीमानं भञ्जयते ।

न स नीतिं कामपि जानीते
न च जानीते धर्माधर्मौ
पशुमारं जनमारणकार्ये
कः प्रतिवेशी कौ वा पितरौ ।
गृहदाहो लुण्ठनमपहरणं
हिंसनमपि वा कुटिलाचरणम्
एवंरूपोन्मादोऽपहसन्
विचरति परितो हि जगन्ति तुदन् ।
मानवसंघे सहसाऽङ्गारान्
वर्षन्नातङ्कं प्रजनयते
अबलानामार्तविलापरवैः
स्वं पांसुलचरितं चर्चयते ।
मानवतामानविघातकरान्
अपकारपरान् प्रसमीक्ष्य परान्
व्यथते भूयो ना सद्वृत्तः
करुणालहरीद्रावितचित्तः ।
घोरे कर्मण्येवंरूपे
सक्तान् दर्शं दर्शं बिभिमः
हे जगन्नियन्तः परमेश्वर !
एतांस्तवैव जम्भे दध्मः ।

# संस्कृतिगङ्गा

कविरत्नम् ओम्प्रकाश ठाकुरः

तरलतरङ्गा संस्कृतिगङ्गा
भाति पुनानाऽखिलविश्वम् ।
अविदितकालादुन्नतभाला-
दुद्भूताया निगमाद्रेः
शान्तिसुधां प्रेम्णा पाययते
जनसमुदायानातृप्तेः
सर्वमङ्गलं मञ्जुलरूपं
यस्या लोके परिदृश्यम् । तरल--- ॥ १ ॥

सर्वं खलु ब्रह्मेतिचिन्तनं
प्रेरयते समदर्शित्वं
प्रेमवितानं तनुते सृष्टौ
निराकृत्य किल भेददृशम्
अज्ञे दीनजने कारुण्यं
विस्तारयते या त्वरितम् । तरल--- ॥ २ ॥

धर्मरागिणी पापशंकिनी
आस्थां धत्ते कर्मफले
वर्णाश्रमसंस्थामनुमनुते
विश्वस्ता सन्नीतिबले
यज्ञदानतपसां प्रवर्तिनी
[illegible] पुरुषार्थम् । तरल --- ॥ ३ ॥

स्वानि परेषां परभूमीर्वा
दुर्भावनया ह्यात्मवशे
कर्तुं विहिता काऽपि न चेष्टा
बलं प्रयुक्तं नापि कृशे
सर्वे मोदन्तां सम्मनसः
भूमाविति यत्सन्दिष्टम् । तरल --- ॥ ४ ॥

भिन्नविचारलहर्यः सततं
यत्रैकत्र समायान्ति
माधुर्यं संसृज्य समन्ताद्
इन्द्रधनुर्भुवि निर्मान्ति
संघटनं तत् परिवारीयं
कुत्रान्यत्र नु परिमृग्यम् । तरल ---॥ ५ ॥

प्रेमरसैकभरं दाम्पत्यं
ह्यात्मयुगलमिलनं पुण्यम्
अत्र हृदयविश्रामोऽपूर्वः
साधनपथसहयायित्वं
ब्रुवते जातु न सन्तो हीदं
कामकौतुकस्यायतनम् । तरल---॥६॥

अनासक्तिभावो विराजते
परहितकर्मणि यज्ञमये
भाति जीवनं रतं प्रवचने
स्वाध्याये वा धर्ममये
भौतिकधनजातादतिशेते
यत्र जगत्यध्यात्मधनम् । तरल --- ॥ ७ ॥

प्रोद्भावयते या वीरानपि

रणविद्याकौशलदक्षान्

दण्डितदण्ड्यान् निजपराक्रमैः

कृपया कृतनिर्बलरक्षान्

रावण-कंस-जरासन्धानाम्

के न विदुर्यद् यद् वृत्तम् । तरल ---।। ८ ।।

उत्सङ्गेऽस्या वर्द्धितवन्तः

ऋषयो मुनयो योगिजनाः

भक्ताः शक्ता अतिसमुदारा

ब्रह्मतत्त्वचिन्तनपरमाः

काव्यज्ञैर्विज्ञानपण्डितैः

भूषितमेतद् धरातलम् । तरल ---।। ९ ।।

संस्कृतिरेषा भरतभूमिजा

सुधापायिनी सुधामयी

विश्वमेकनीडं सम्मनुते

सकलधरापरिवारमयी

सर्वासां चिन्तनधाराणां

प्राच्यं भवति परिष्करणम् । तरल ---।। १० ।।

# निःस्यन्दिनी

डॉ0 जनार्दनप्रसादपाण्डेयो मणिः

**संक्षिप्तः परिचयः-** गीतिरियं शुभकामनार्थं विरचिता वर्तते । गीतिकायामेतस्यां कविना पदे पदे सत्कामनानामेव झङ्कृतिः कृता । एतस्मिन्नतीव शुष्कसंभाषणसंवलिते लोके काऽपि सुमधुर-भावनानां प्रवाहिका भवतु । सा भावनानां प्रवाहिका वा निःस्यन्दिनी उत्सकल्पा भवतु, न केवलमुत्सकल्पैव, अपितु वेदनायाः सखी भवतु यतो हि साम्प्रतं वेदनायास्सर्वा अपि पयस्विन्यो निःस्यन्दनविहीनाः वर्तन्ते। एभिरेव भावनाबलैर्विरचितेयं गीतिः।।

भवतु काऽपि निःस्यन्दिनी भावनायाः ।
हसन्त्युत्सकल्पा सखी वेदनायाः ।। भवतु ...........

नवां माधुरीं स्नेहसिक्तां दधाना ।
भवतु काऽपि सीमन्तिनी कल्पनायाः ।।१।। भवतु...........

हृदनुरागवीणां सुखं वादयन्ती ।
भवतु काऽपि कामायनी मन्त्रणायाः ।।२।। भवतु...........

मुदाऽवेक्ष्य भावं सुधामर्पयन्ती ।
भवतु काऽपि रे चुम्बिनी प्रार्थनायाः ।।३।। भवतु............

लसत्तोषपयसाऽऽशिखं क्लेदयन्ती ।
भवतु काऽपि क़ादम्बिनी सर्जनायाः ।।४।। भवतु...........

भवाऽभ्यन्तरं वाह्यभागं स्पृशन्ती ।
भवतु काऽपि संवर्धिनी धारणायाः ।।५।। भवतु............

# मम जीवनम्

डॉ० जनार्दनप्रसादपाण्डेयो मणिः

**संक्षिप्तः परिचयः-** गलज्जलिकेयं जीवनमभिलक्ष्य विरचिता वर्तते । साम्प्रतमस्माकं तरुणानां यौवनं, विविधाभिः शङ्काभिस्सम्प्राप्तेन दाहस्वाभावाऽभिन्नेन केवलमनलेनैव रात्रिन्दिवं दग्धीकृतं वरीवर्ति । नैव विज्ञातं, यदस्माकं मधुरमधुरया कल्पनया किं क्रियते । सा वृथैवाऽस्माकं जीवन-मौग्ध्यं प्रति प्रयत्नशीला वर्तते । व्यथाः पीडा एव अत्र हेतवो गलज्जलिकाया नान्याः ।।

शङ्काऽनलेनाऽहर्निशं दग्धीकृतं ननु यौवनम् ।
इदमेव किं रे ! कल्पने ! मुग्धीकृतं मम जीवनम् ।।
त्वन्मसृणमदिरे तदजिरे मृदुमाधवी रसमाधुरी ।
शयनाङ्गणे शय्यासु हा, शुष्कीकृतं मम जीवनम्।।१।।

शङ्का.......

रमते नभसि हा कौमुदी स्वप्ने कुमुदकुञ्जाऽञ्चले ।
नयनाञ्जनस्रवितै रसैरार्द्रीकृतं मम जीवनम् ।।२।।

शङ्का........

सञ्चरति जातु श्रुतिपथे नूपुर-रवाणां मत्तता ।
अल्पक्षणच्छायाऽक्षरैर्विजडीकृतं मम जीवनम् ।।३।।

शङ्का........

सुरभितसुमानां मालिका हारावली में नो कथम् ।
हा, क्रूरकालविडम्बनैः कृष्णीकृतं मम जीवनम् ।।४।।

शङ्का........

हृदि सा तृषा रसलालसा कविताविलासेनाऽधृता ।
हा तैरभीप्सितमंत्रितैः क्षुब्धीकृतं मम जीवनम् ।।५।।

शङ्का.......

# त्रयी

आचार्य कामताप्रसाद त्रिपाठी 'पीयूषः'

## कृतिः[१]

कविता न नगेन्द्रनन्दिनीच्छविनिष्पत्तिकलैव केवला !
शिवभालदृशोऽग्निदीधितिर्मदनोद्दाममदापहापि सा !!
तपनद्युतितापिते शुचौ जलहीने ज्वलितेऽवनीतले ।
कविता भवभूतिभूषिता तनुते नूत्नजिजीविषारसम् ।।
सुकृतिर्न पराभवोद्भवा करुणैवास्ति पराजितात्मनाम् ।
सरसा विजिगीषुगर्जिता विजयोल्लासवरप्रदाऽपि सा !!
अनले सलिले नभःस्थले वितले भूमितलेऽथवाचले !
कविता क्व न भाति निर्भयं रुचिरस्नेहमयी यथेप्सितम् !!
सगुणे ललिते रसात्मिके नवशब्दार्थमनोज्ञविग्रहे !
कविते ! प्रतिभासमन्विते वचनं मेऽस्तु सदा त्वदन्वितम् ।।
कविते ! भव चारुकारणं निखिलस्यापि भवस्य भाविनः ।
क्षपयार्त्तजगद्विपन्नतामनुतिष्ठाशु तमोनिवारणम् ।।
रसनाय विदग्धचेतसां कुरु वागर्थविभे ! मधुस्मितम् ।
अनुभूतिरसायनं भवेत् सुखदं स्वास्थ्यकरं हि तावकम् !!
रुचिरे ! वह सावधानतो युगपीडामपि भीषणां क्षितेः ।
अनुभूय यथार्थमोजसा कुरु तापत्रयकृन्तनं द्रुतम् ।।
कविते ! नगरेऽथवा वने श्रमिकाणां श्रयतां श्रमं तपः !
खनिखातखनित्रझङ्कृते श्रमगीतेऽपि विराजसे न किम् ?
रुदितौषधिमात्रजीविते क्षुधितक्षाममुखे पयो विना ।

१. वर्त्तमानदृष्ट्या कवितैव लक्षिता वर्तते ।

कृशितेऽपि शिशौ तव स्थितिर्ध्वनिजे भारति ! दृश्यतेऽधुना ।।
विमले ! जटिलं निरालयं विषमाचम्य सुधाप्रदं भवम् ।
भज भोगिभृतं दिगम्बरं भव सायुज्यशिवाकृतिः स्वयम् ।।

## विकृतिः[२]

मुहुरद्य महीसुताहरस्तनुते दारुणकर्मकौशलम् ।
व्यथितो भरताग्रजः स्वयं क्षतसौमित्रिकृते विषीदति ।।
कलिरेव करालकालियः कुरुते जीवनहारि जीवनम् ।
यमुनापुलिने न वल्लवीसमुदायः खलु दृश्यतेऽधुना ।।
ऋतुराजसमागमोऽऽभवद् भुवि भूयोऽपि निरर्थको यतः ।
प्रकृतिर्विकृताद्य मानवी सुषमां तान्न वृणाति माधवीम् ।।
सहकारवनावनौ चिराद् बहुकण्टद्रुममालिकैधते ।
पिककूजितपूजितस्थले निवसन्त्यद्य सुखेन वायसाः ।।
मधुरन्न मिलिन्दगुञ्जनं लुलिताभाति रसालमञ्जरी ।
जयतीव जगद्विभीषिका मधुमासेऽपि विषावहो मरुत् ।।
निलयेऽपि जना न रक्षिता दनुजानां निकरैर्विभीषिता ।
श्वसितं विषवातदूषितं प्रलपन्तीव नयज्ञमानिनः ।।
मनुजा गगनाङ्गणे मुदा विहरन्त्यत्र न कोऽपि संशयः ।
मनुजत्वमुपेक्षितं परं प्रति पातालतलं पलायते !!
प्रहिता जननी निकेतनान्नवसौभाग्यफलाभिलाषिणी ।
श्वसुरालयलोभपावके दुहिता याति हुता यमालयम् ।।
अनलेन निजालयं दहन्ननिलो वाति निरङ्कुशोऽनिशम् ।
प्रशमाय नवीनवापिकाखननार्थं क्रियते समुद्यमः ।।
भुजगेष्वपि रज्जुविभ्रमो रजतं शुक्तिचये प्रतीयते !

---



२. कवितायामस्यामधुनातनी विकृतिर्निदर्शिताऽस्ति ।

तिमिरावृतनेत्रदीधिती रजनी शास्ति विमोहितं जगत् ।।
दलिताखिलनीतिपद्धतिः प्रकृतिस्था विकृतिः समेधते
पुरुषार्थचतुष्टयेऽधुना धनकाममद्वयमेव शिष्यते ।।

## निष्कृतिः[३]

स्वजनैस्त्वरितं निवार्यतां निजखड् गेन निजाङ्घ्रिकृन्तनम् ।
उचिता न परस्परारिता सृतिसौन्दर्यहरी तमोमयी ।।
रिपुतैव विसृज्यतां जनै रिपुरेव प्रभवेन्न भूतले ।
रिपुता निहता न चेद् यदा रिपुनाशोऽपि किमर्थकस्तदा !!
न तपस्वितितं परम्परागतसौन्दर्यमुपेक्षितं भवेत् ।
न च मीलितलोचनां चरेत् पितृकूपे गरलान्विते रतिम् ।।
निजनिर्मितयन्त्रयन्त्रिता न भवेयुर्मनुजा नगोपमाः ।
स्मरणीयमिदं निरंन्तरं निखिलैर्विश्वहिताभिलाषिभिः ।।
परमाणुमहायुधार्णवे मनुजो मा स्म गमत् प्रलीनताम् ।
इति चिन्तनलक्ष्यसङ्गतिः कलुषाच्छन्नयुगस्य निष्कृतिः ।।
त्रिदिवस्य विभा महीतले यदि न स्यादिति सह्यते, परम्
निरयस्य कठोरयन्त्रणा भुवि सह्या न कदापि मानवैः ।।
मनुजो मनुजाय जायतां प्रतिशोधस्य मतिर्विहीयताम् ।
अनुरागरसो निपीयतां हृदये सत्त्वनिधिर्निधीयताम् ।।
सततं यदि बुद्धिमन्थनाद् विषमेवाधिगतं भविष्यति !
परिपीतविषः शिवोऽपि तत् प्रतिवेलं किमु पातुमेष्यति ?
दुरितक्षतये विभावितो नहि धर्मः कलहाय कल्पितः ।
तमसां प्रशमाय योजितो गृहदाहाय भवेन्न दीपकः ।।
वसुधैव कुटुम्बकीकृता रुचिरा भारतभूमिभावना ।



३. इह तु काचन समस्या निराकृतिर्निरूपिता विद्वत्तं

सकलैरपि विश्वमानवैर्भजनीया गतकिल्विषैः सदा ॥
तिमिरेष्विव रश्मिलालसा जगदाश्वासमयीयमेव यत् ।
सरितो जलदा इव द्रुमा बहवः सन्त्यधुनाऽपि सज्जनाः ॥

# चिन्ता निकृन्तति मनो मम

श्री0सुन्दरराजः

सन्तः पुरा व्यपनयन्त यतश्चरन्तः

सन्तापमाशु जगतो हितमाचरन्तः ।

सन्त्राससन्ततिरशान्तिरपीति तत्र

चिन्ता निकृन्तति मनो मन सा दुरन्ता ।। १ ।।

पुण्या उदारचरिताः पुरुषाः पुरा नः

पूर्वे कुटुम्बमिव विश्वमचिन्तयन्त ।

हन्ताधुना तुदति देशविभागवादः

सन्तापयन् सपदि सज्जनमानसानि ।। २ ।।

नानेह पश्यति हि यस्स विनश्यतीति

सा नश्श्रुतिश्श्रुतिसुखं सघृणा गृणाति ।

नानामतैरिह जनः कलहायमानो

जानाति किं न निगमान्तवचो हितं तत् ।। ३ ।।

मां सर्वतो मयि च सर्वमवेक्षमाणो

मामेति मानव इति स्फुटमाह कृष्णः ।

कामं पठन्नपि पुनः पुनरस्य गीतां

वामं नरो विषममाचरतीति चित्रम् ।। ४ ।।

आनन्दरूपममलं परमाणुभूतम्

आत्मानमाहुरविनाशिनमार्षवाचः ।

आचार्यतस्तदवकर्ण्य न वेत्ति लोकः

आश्चर्यमेतदधिकं न किमप्यवैमि ।। ५ ।।

किं क्रीस्तुसीखपरसीयमहम्मदीयैः

आराध्यमानभगवानपरो विभिन्नः ।

रामाच्छिवाद्गणपतेर्यदि सत्यमेतत्
स स्तात्कथं निरधिको वद निस्समो वा ।। ६ ।।

सृष्टिस्थितिप्रलयकारणभूत एकः
दृष्टेरगोचरतया बहुधा स घुष्टः ।
नष्टेऽस्मदीयचरितैस्तदनुग्रहे तु
कष्टं विनश्यति मिथः कलहेन लोकः ।। ७ ।।

प्रीतिं प्रसारय परेषु परं न वैरं
प्राणिष्वपि प्रकटय प्रणयं सदेति ।
प्रज्ञापयन्त्यविकलं सकलेऽपि धर्माः
प्रच्छाद्य तत् प्रहरणोत्थकरो नरोऽद्य ।। ८ ।।

अद्यापि लोक इह पूजयते कबीरं
अद्यापि मानयति नानकमेष लोकः ।
अद्यापि तं शिरिडिसाइमहानुभावं
अर्चत्यथापि कलहः किल धर्मनाम्नि ।। ९ ।।

पक्षैरलक्षितहितैरिह राजतन्त्रे
दक्षैस्स्वमर्थमत एव पुरो दधानैः ।
विक्षोभितां भरतभूमिमिमाभीक्ष्णं
रक्षन्तु भारतजनाः निजदीर्घदृष्ट्या ।। १० ।।

छायेव मुञ्चति न या किमपि प्रपञ्चे
माया हरे गुणमयी तव दुर्निवारा ।
हेयेषु कर्मसु नरान् सहसा प्रवृत्तान्
कायावृतान् विदधती कृपयाऽपनेया ।। ११ ।।

अन्ते सुन्दरराजः सन्तापापोहनार्थमर्थ्यं नः ।
चिन्तामणिमिह जगतां सन्ततसेव्यं हरिं ब्रूते ।। १२ ।।

# मेघ !

डॉ0 बदरीनाथ कल्ला

रे मेघ, समुद्रात् धारयसि जीवनं
मत्पुरतो निःसंकोचम्
तथापि वर्षाभावः ।
इत्थं गर्जसि खे
भ्राजसे खे
शोभायात्रायां सन्नद्धः
क्व गच्छसि? तथापि वर्षाभावः ।
आरूढः शिखरेषु यथेच्छं सानन्दं
पर्यङ्के दोलायमानोऽसि
तथापि वर्षाभावः ।
दृष्यते प्राच्यां मुहुर्मुहुः,
इन्द्रधनुः मनोहरं, कृषकजीवनम्
तथापि वर्षाभावः ।
तिरोधयसि सर्वं
ग्रहमण्डलं, तथापि वर्षाभावः ।
धृत्वा वासांसि कृष्णानि
क्व परिभ्रमसि? क्व धावसि?
तथापि वर्षाभावः।
रे क्रूर पयोद,
न द्रवसि,
आकर्ण्य आर्त्तनादं
कामातुरस्य यक्षस्य
तथापि वर्षाभावः

व्युप्तकेश पयोद ।
कृष्णधनमपहृत्य
क्व पलायसे
सूर्यस्य भासा शीघ्रं
खण्डशो भविष्यसि,
तथापि वर्षाभावः ।
सर्वे मेघाः
राजनीतिज्ञाः
भ्रान्तिजनकाः
गर्जन्ति नित्यं
न तु वर्षन्ति ॥

# कृष्टिः

राधावल्लभः

धरित्र्या गात्रेषु
आरक्त-बालातपच्छेदच्छवीनि
अद्यापि विकसन्ति कियन्ति कियन्ति
कह्लारोणि
गोष्पदेष्विव पङ्कप्रायेषु
पुष्करेषु
बङ्गेषु वा कलिङ्गेषु वा ।
कह्लाराणि न जातु मनागपि
क्षीयन्ते
पुनरुत्फुल्लन्ति
एकस्मिन् म्लाने
अपरमुत्फुल्लति कह्लारम्
उन्मुखं खे
आपिबत् तापं रवेः ।
यावती पङ्किला सङ्कुला पिच्छिला कर्दमैर्मेदुरा
पुरातनी चिरन्तनी च सुस्थिरा च शाश्वती
विद्यते च खिद्यते च जीर्यते वसुन्धरा
तावती नवीनता च भव्यता प्रवर्धते च रक्तिमा
कृष्टौ किल चैतेषां
यौवनमेतत् कह्लाराणाम् ।

# मार्गणा

राधावल्लभः

हिमगिरिमेखलासु
मसृणघुसृणकस्तूरिकामोदेन
उन्मादिता
मुहुरुन्नतघोणा
धावन्ति मृगाः
कस्तूरिकां मार्गमाणा
अजानन्तस्तस्या
नाभिगह्वरे सन्निहितं स्वे
निधानं प्रत्यक्षम् ।
धावन्ति मृगा इदानीं ते
नगरेषु चत्वरेषु हट्टेषु वीथिषु
सततविनिर्गतधूमोत्पीडे
द्रव्यजल-प्रस्तरजल-ज्वलन-जनित-दुर्गन्धव्यूहे
प्रचलित-द्विचक्र-त्रिचक्र-चतुश्चक्र-वाहनसमूहे
अहमहमिकया शङ्कया वाञ्छया स्पर्धया
निरवकाशं धावन्तः
आमोदमपि कस्तूर्याः सम्प्रति
विस्मृतवन्तः ।

# अहो कांक्षितम् उद्ध्वस्तम्

डॉ० सौ० कमल अभ्यंकरः

निष्ठुरविधिना कर्म साधितं
अहो कांक्षितम् उद्ध्वस्तम् ।।
दैवात् प्राप्तम् एकमपत्यम्
विलोभनीयं कन्यारत्नम् ।
शिशुक्रीडाभिः गृहं नादितम्
विधेर्विहसितं नैकेन श्रुतम् ।।१।।

बालिकापदं लयानुबद्धं
मञ्जुलवचनं स्मितानुविद्धम् ।
मुग्धचेष्टितं गतं सुबद्धम्
भविष्यनिभृतं न केन ज्ञातम् ।।२।।

मुकुलं जातं विकासोन्मुखं
शरीरमखिलं नर्तनोत्सुकं
चित्तं नर्तनस्वप्नभारितं
न केन पठितं विधेर्विलिखितम् ।।३।।

शनैः सुकीर्त्या कृतम् आस्पदम्
सुदूरशिखरे केंद्रितेक्षणम् ।
अनिशम् ईप्सितपूर्तिचिन्तनम्
न केन विदितं कर्काक्रमणम् ।।४।।

म्लानम् अर्धोन्मीलितकुसुमम्
चरणं जातं वेदनाकुलम्
कुता धावनं कुतो नर्तनं
मनः शङ्कितम् विरतं हसितम् ।।५।।

पितृभ्याम् ननु किं किं न कृतम्
मृदुबालिकया किं न मर्षितम् ।
धन्वन्तरिणा शरणमागतम्
जातमवश्यं चरणखण्डनम् ।।६।।

आशाबन्धात् सर्वमर्षणम्
कृत्रिमचरणं नर्तनक्षमम् ।
जातमसह्यं करुणदर्शनम्
किं नु योजितम्, किं ननु घटितम्।।७।।

मातृपितृदुर्दैवविलसितम्
वृन्तात् कुसुमं विधिना कृत्तम् ।
अतः परं किं भवेद् दारुणं
मनोरथानां चित्यां ज्वलनम् ।।८।।

उद्ध्वस्तमहो सर्वकांक्षणम् ।।

# शल्यं मे मनसि

डॉ0 सौ कमल अभ्यंकर

एकस्मिन् दिने गृहाङ्गणे

उदितम् एकं पल्लवितं ।

चारुगुल्मकम् अरुणवर्णकं

मनः सहर्षं सकौतुकम् ।।

पश्यत एव हि नातिचिरं

अणुकगुल्मकं रूपान्तरितम् ।

गगनचुम्बिनं पर्णसमृद्धम्

मनस्तु दृष्ट्वा स्वप्नरंजितम् ।।

श्वः प्रभाते गृहाङ्गणे

श्वेत-रक्त-मृदु-कुसुमानां ।

स्यादास्तरणं नयनहरं

मनस्तु उत्पुलकं च अधीरम् ।।

वसन्तमनु आगता वसन्ताः

यथा आगताः तथा प्रतिगताः

कुसुमस्वप्नः कल्पनास्थितः

मनस्तु खिन्नं प्रतीक्षाकुलम् ।।

गृहाङ्गणे यद् गृहान्तरेऽपि

चिन्ता हृदयं दहतितराम् ।

अपि पूर्णं स्यात् मनोवाञ्छितं

मनः विषण्णं सोत्कण्ठम् ।।

कान्तां मृगनयनां गौराम्
कदा नु प्रेक्षे गर्भमन्थराम् ।
शिशुक्रीडाभिः मधुमधुराभिः
कदा मनः स्यात् हर्षनिर्भरम् ।।
किं नु खलु भवेत् अस्य कारणम्
ममैव शून्यं सदनमङ्गणम् ।
जीवाम्येतदपूर्णजीवनम्
निःसन्तानं पुष्पविहीनम् ।
निमज्जामि खलु अन्धे तमसि
निगूढशल्यं मे मनसि ।।

# 'सीज़ो' काव्यानि [१]

डॉ० हर्षदेव माधवः

१. बोंगलाइ[२] शानसानौ
प्राप्नुयाम् . . . .चेत् मे स्थानम्।
कुर्यां च ऋषिपदेषु
किमपि ऋचानां गानम्
जन्मान्तरे स्रोतोरूपे
आत्मनो भवेत् पानम् ।।

२. अश्वा जाता जातो वायुः
जातः सूर्यो मनसि ।
शैलाः/नद्यः/वृक्षाः/आशाः/
वसन्ति मे रहसि
मृदः प्रत्यणु मयि
त्वमसि-तत् त्वमसि ।।

३. कुम्भस्नाने मग्नाः सर्वे
क्लिन्नशरीरा याताः ।
धावन्ति गायन्ति स्नान्ति
किं स्नाताः खलु स्नाताः ?
मयि मृत्तिकागर्भे
गङ्गाया धारा जाताः ।।

४. मेघमेदुरं गगनं
नितरां रम्या वृष्टिः ।
अब्धितटे सिकतासु
अन्तः शुष्काऽस्ति शुक्तिः ।
कुत्र स्वातिबिन्दुः ? कुत्राऽस्ति
मौक्तिकशुभ्रा मुक्ति : ?

---

१. दक्षिणकोरियादेशस्य काव्यप्रकारोऽयम् ।

इदं 'सीजो' काव्यगुच्छं श्रीमतां कविकुलगुरूणां रमाकान्तशुक्ल-महाभागानां पञ्चाशत्तमे जन्मदिवसोत्सवे, तेषां करकमलयोः सादरं समर्प्यते।-डॉ० हर्षदेव माधवः

2. Legendary Tadist mountain where hermits of super-natural power are said to live. (Bonglaishan)

५. शान्तजले कायस्य मे
मृष्टानि प्रतिबिम्बानि ।
सिकतासु स्थगितानि
चंचलानि वारीणि
चन्द्रद्युतिरूपाणि
तमसि प्रसूतानि ॥

६. चिनोति बालकः कोऽपि
शङ्खान् नदीवीचिषु ।
यथा मार्गयति गूढाः
शुक्तीः स सिकतासु ।
तथैव गूढं प्रणष्टं मां
गृहाण मृत्यो! आशु ॥

७. ऊर्मिमालानां ताण्डवे
प्रमत्तः क्षुब्धः सिन्धुः ।
तमसो गर्भाद् उदितः
लक्ष्मरम्यो हिमांशुः ।
श्वेतपत्रे शब्दाकारे
प्रसूतो मषिबिन्दुः ॥

८. तृणानि दृष्ट्वा सावेगं
धावति द्रुतं हयः ।
दुग्धं प्रति विडालस्य
गात्रे जायते रयः।
हरीतिमा ते, तेऽमृतं
अहं त्वयि तन्मयः ॥

९. ताईशान[3] गिरिरुच्चै-
र्व्योम दूरं पश्यति ।
विशालोदधिः पृथ्वीं
विस्तीर्णां कथयति
त्वमसि प्रिय ! सीमानं
नाम्नो मे रचयति ॥

१०.खण्डितानि रे पात्राणि
द्राक्षावल्ली जीर्णाऽस्ति ।
कानि क्षणानि शिष्टानि
का च कथा दीर्घाऽस्ति ।
पिबन्तु मद्यं मित्राणि !
व्यथाऽन्तिमा कीर्णाऽस्ति ॥

११. सहसा चरणो वामः
जातः कर्दमयुक्तः ।
विलोक्य च क्लिन्नं मार्गं
मोदो हृदि ह्यनुक्तः ।
आगताः ! आगताः वर्षाः !
अहं चास्मि रे मुक्तः ॥

१२. कारागारस्य लोहस्य
लघुकं वातायनम् ।
रन्ध्रेभ्यो वर्षा-बिन्दूनां
शनैः शनैः पतनम् ।
अभियुक्तस्य स्वप्नेऽस्ति
प्रियायाः आलिङ्गनम् ॥

---

3. Taishan a high mountain in eastern China

१३.कोऽपि वीरः क्षालयति
निर्झरे करवालम् ।
अन्तर्हिता वृक्षच्छाया
रक्तरक्तं शैवालम् ।
शृणोत्युच्चकर्णो हयः
रुदन्तं च शृगालम् ॥

१४.रक्तकलङ्कं खड्गस्य
मार्जयितुं प्रवृत्तः ।
निशीथे निर्झरजले
य़ोधपुरुषो वृद्धः ।
रक्तां स्वच्छायां च नीरे
दृष्ट्वा जातः स क्रुद्धः ॥

१५. हेमन्तातपः प्रविष्टः
तव वाक्षसवस्त्रे ।
धृष्टः पवनः स्पृशति
करं निक्षिप्य गात्रे ।
गोपवंशीं शृणु ! सखि !
किमप्यहम् आचक्षे ॥

१६. मनसः हिरोशिमायां
क आनयेत् वसन्तम् ?
प्रतिपालयामि क्षणं
तद् जीवनपर्यन्तम् ।
का संजीवनी दास्यति
सर्वनाशाय .. .. अन्तम् ?

१७. क उद्बोधयेत् सुप्तं हा !
कः स्पृशेत् मृतगात्रम् ?
कः प्रज्चालयेत् शमितं
कः पूरयेत् कुपात्रम् ।
कस्य कर उद्घाटयेत्
पिनद्धं बद्धं मात्रम् ॥

१८. वक्षसि मे पीडयति
चन्द्राख्यः अस्थिखण्डः
करवाले रक्तं/दूरात्
वंशीगीतस्य दण्डः ।
निशीथे स्मृतिव्रणोऽस्ति
नास्मि विजितोऽखण्डः ॥

१९.भित्तिमाश्रित्य मे खड्गः
निद्रायते दिनेषु ।
रुजयति मामिदानीं
वक्षसो विवरेषु ।
किं कृतं, हा धिक् ! शस्त्रं
त्वया युद्धक्षणेषु ? ॥

२०. काक भ्रातः गच्छ दूरं
गच्छ दूरं मे गृहात् ।
कोऽपि वीरो यो गतोऽस्ति
नैव निवृत्तो रणात् ।
व्योम्नि गृद्धाः / हा हताऽस्मि
कङ्कणं भ्रष्टं करात् ॥

(गजलछंदः)

२१.बद्धदुर्गे शस्त्रवर्षाः /
अग्निज्वालाः /मंत्रणा /
शौर्यनादाः / रोदनानि
नाशयुक्ता यन्त्रणा ।
अस्ति रात्र्यां स्नेहशब्दे
वीरतायाः प्रेरणा ।।

(छान्दसप्रयोगः)

२२. दूरंगता ते विजयस्य शब्दाः
दृष्टो न सः ।
ससैनिका अश्वरथाः प्रयाताः
दृष्टो न सः ।
प्रतिनिवृत्ता मनसि विलापाः
वीरो गतः ।।

२३.कापुरुष ! कस्मात् स्थितः ?
गच्छ मृता माता ते ।
आशीर्वादार्थं विलम्बो
नैवाद्यापि युज्यते ।
हयारूढं पुत्रं दृष्ट्वा
रोदितुं सा याता कक्षे ।।

२४. शिष्यपतङ्गो यातोऽस्ति
किं लब्धा तत्त्वशिक्षा ?
पुष्पगुरुभ्यो वसन्ते
मिलति गन्ध-भिक्षा ।
प्राप्य वरान् या प्राप्ता/सा
प्राप्नोत्युत्तमां दीक्षाम् ।।

२५.पौरजना हर्षोन्मत्ताः
पटहे जयघोषः ।
हतोऽस्ति रिपुः समरे
सफलो राज्ञो रोषः ।
हतः सः / विधवायै मे
युद्धं न, भाग्यदोषः

२६.वृक्षेभ्यः कानि पर्णानि
पतितानि कीर्णानि ?
नदीभ्यः कानि जलानि
आगतानि गतानि ।
त्वमेव मूढ! रोदिषि
लघुकानि दुःखानि ।।

२७.रिक्तघटा त्वं प्रयासि
नदीप्रवाहात् बाले ।
गोपवंशीगीतं त्वया
गृहीतं पात्रे जाने ।
प्रणष्टां न त्वां प्राप्स्यसि ।
त्वं कस्मिन्नपि काले ।।

२८.तालवृन्त-मधुच्छत्रं
जीव-मक्षिका याति ।
वृक्षच्छायां द्राक्षातुल्यां
दुःखी जीवोऽप्यश्नाति ।
मत्कुणयुद्धेऽवजितः
निदाघेऽसौ निद्राति ।।

२९. पतङ्गकः पुष्पात् पुष्पं
प्रयातीति नु मिथ्या ।
पुष्पं क्षीणं पतङ्गस्य
वृथा जाता प्रतीक्षा ।
विह्वलेन दीपवह्नौ
अतः कृताऽऽत्महत्या ।।

३०.नास्ति खड्गो नास्ति युद्धं
नास्ति शौर्यं हस्तयोः ।
नास्ति 'साधु साधु' शब्दः
नास्ति तेजो नेत्रयोः ।
स्वप्नपीडाऽस्ति त्रपायाः
युद्धभीरोः गात्रयोः ।।

३१.शैत्यत्रस्तास्तापतप्ताः
रुदन्ति दग्धाः शैलाः ।
निर्झरमयाः प्रकटाः
सविषादा विलापाः ।
कुर्मश्चिकित्सां मर्मणि
न्यस्य शाद्वलात् पट्टान् ।।

३२.छायायां तिरोहिताऽस्ति
मार्गे सा रम्याऽऽकृतिः ।
यथा मौने शमिताऽस्ति
संगीतमयी श्रुतिः ।
इदानीं स्मृतिरूपा
वाद्ये शिष्टा झंकृतिः ।।

३३.अये ! शीतलमुदकं
देहि देहि ते शैत्यम् ।
करोमि किञ्चिद् न्यूनं
तप्तपर्वतोष्णत्वम् ।
क्षयितुं विधेः कार्कश्यं
देहि पुष्प ! मार्दवम् ।।

३४.केनोद्घाटितं द्वारं मे
केन च वातायनम् ?
केन दीपो निहितोऽस्ति
केन कृतं शयनम् ?
गोष्ठीं कर्तुं जन्मनां किं
द्रक्ष्यामि मे स्वजनम् ? ।।

३५.छिन्धि मां छिन्धि मां शीघ्रं
मयि नास्ति प्ररोहः ।
भिन्धि मां भिन्धि मां शीघ्रं
जीर्णोऽस्ति मयि लोहः ।
प्रहर ध्वंसावशेषे
नश्येत् येत् मिथ्यो मोहः ।।

३६. क्रीता बुद्धिः क्रीता लज्जा-
क्रीतं ज्ञानं मे स्वल्पम् ।
ग्रामं पृच्छति निन्दति
प्रेम मत्वा मे गल्पम् ।
त्वयि देहि मे स्थानं, नाथ !
आगताऽस्मि ते तल्पम् ।।

३७.लज्जा पलायिता दूरं
नीवीबन्धः शिथिलः ।
पुष्पैः सह विकीर्णोऽस्ति
केशपाशः कुटिलः ।
बाहुपाशे नायाति मे
नाथोऽस्ति रे ग्रहिलः ।।

३८.वातायनेष्वतीतस्य
प्रणष्टाः दीपमालाः ।
दुर्गं दुर्गमं खादन्ति
वैराग्निघोरज्वालाः ।
किंवदन्ती पात्रे श्याना
इतिहासस्य हालाः ।।

३९. ऋषिर्मृतः-जटाकेशाः
पवनात् प्रचलन्ति ।
मंत्रगानं श्रोतुं मृगाः
कर्णान् पुनः ददति ।
मृत्युपारधिमज्ञात्वा
नीवाराँश्च खादन्ति ।।

# बद्धा श्रमिका

प्रो0 देवदत्त भट्टिः

क्षेत्रे मृदं क्षिपन्ती
क्षिप्तेष्टिकेव
एका स्त्री,
स्त्री सत्यपि स्वशीलमाच्छादयितुम्
न धारयन्ती स्त्र्युचितवासांसि,
तथाऽपि स्त्री एवास्ति
मृदं च क्षिपति क्षेत्रे ।
तस्याः स्वमृदपि न शोभना ।
स्यात्तस्याः श्रमस्येदमेवोत्तरम् ।
द्विकालं भोजनमपि तस्यै न निश्चितम् ।
अधुना-
अरुन्तुदोऽहर्निशश्रमः
तस्या : क्षुधामपि समाप्तप्रायां करोति ।
अद्य सा यन्त्रमिव भ्रमति ।
समाजवादोद्घोषेषु गुरुतरेष्वपि
बद्धश्रमिकसमस्यासमाधानपरकोच्चघोषेषु
शिरःस्थपात्रे भृता मृदपि
तस्या स्विका नास्ति ।
यस्य क्षेत्रं तस्यैव मृद्भवति ।
परं क्षेत्रस्था मृदपि
तस्या मृदैव, तस्याः स्वेदसलिलेनैव च
उर्वरा शस्यश्यामला च क्रियते ।

उन्मुक्ते नभसि
मरुत्स्तनंधयः पृष्ठसक्तोदरः,
क्रन्दन् तस्या अर्भकः
रोदितुमप्यशक्तः
कस्य न चित्तं द्रवति !
तस्य रुदितमाकर्ण्य
ममतासंवलिता सा
तं स्ववंक्षसोत्पीड़यति ।
सोऽपि मातुः स्तनयोः
पयोऽन्वेष्टुं दृढं यतते ।
परं क्वास्ति तत्र तत् !
तत्र तु केचित्स्वेदबिन्दव एव सन्ति ।
स तानेव पय इति कृत्वा पिबति ।
पयसेऽन्नमपेक्षितमस्ति ।
सा तु स्वश्रमस्य फलम्
पुष्कलमन्नमपि न प्राप्नोति ।
यतो हि सा बद्धश्रमिका ।

# पिन-कुशनः

प्रो० देवदत्त भट्टिः

पिनकुशनः (PIN CUSHION)
इवास्ति मे जीवनम् ।
मम कायो जीर्ण-शीर्णो जातः ।
वेदनैव मे सम्पत्,
वेदनैव मेऽनुभवः ।
शूलानां भारं शिरसा वहामि ।
अस्ति कश्चिद्,
यो मे भारं क्षणं वहेत् ?
मम वदनन्तु मसृणम्,
स्थूलो दृश्यते मे कलेवरः ।
परमस्मि अन्तर्हीन एव १
सन्नपि पिनकुशनः,
नैककार्याणि साधयामि-
पेपरवेटो भवामि
स्वामिनं प्रसादयितुम् ।
परहिताय सर्वस्वत्यागम्
प्रतिरोमशूलितोऽपि, करोमि ।
शाश्वतीं शूलवेदनाम्
लोचने मीलयित्वा सहे ।
प्रतिपलं पीडितोऽपि
सतताट्टहासं करोमि ।
अयि मित्राणि ! जानामि करुणरसपीडाम्,

भवभूति-मिल्टन-मीरा-महादेव्यः
ग़ालिब-शिवबटालविप्रमुखाः
शंके, न बुभुजुस्ताम् ।
पुत्रमित्रकलत्रविरहपीडा,
समयसीमिता ।
परं मे पीडाऽनवरता,
जीवनं पीडापर्यायं जातम् !

# पशूनां निमन्त्रणम्

प्रो0 देवदत्त भट्टिः

मानवो मानवं हन्ति,
तेषु च कदाचरति,
इदं दृष्ट्वा मानव !
मानवमभिमन्यसे स्वम् ?
तव जगति-
निरागसां हत्या
सामान्यकृत्यमिव गण्यते ।
धर्म-तर्क-बुद्धिविवेकाः,
येषु तवासीन्मानो महान्,
सत्तां जहति ।
तव जगति
सुखसुरक्षासम्मानाः
शशश्रृंगायिताः,
परम्पराप्रांप्ताः
आस्थाः सिद्धान्ता विश्वासाश्च
समाप्तिमिताः ।
तव जगद् दृष्ट्वा
परमात्मसत्तायामपि संदिहामहे ।
मानव !
अस्मत्प्रशस्यतरो भवितुमभिमन्यसे !
कस्मिन् क्षेत्रे ?
किं वयमिव (पशव इव)

न व्यवहरसि ?
क्वास्ति ते श्रेष्ठता ?
मनोर्दशांगधर्मस्य
एकमप्यंगं वहसि कच्चित् ?
भ्रातः !
विस्मरसि डार्विनवादम् ?
वयं तवाग्रजाः स्मः ।
नास्ति त्वयि वरिमा कयापि दृशा ।
अनुज !
यत्र त्वं सर्वं तदपानयः-
यदासीत्ते पूर्वजानां प्रियम्,
इदानीं, क्रियासमभिहारेण
आवयोः (पशुमानवयोः)
भेदमप्यपाकुरु ।
वरिम्णो मिथ्याभिमानं सन्त्यज ।
यतो हि-
आवयोः (पशुमानवयोः)
क्रियाकलापो व्यवहारश्च समः,
मानसिकता च तुल्या ।
आयाहि !
राष्ट्रियैक्यस्य
तुमुलोद्घोषघने युगेऽस्मिन्
आवामपि (पशुमानवौ)
एकीभवावः ।
सीमाभित्तीरुत्खनावः,
या आशतीभ्यः

नौ पृथक्कुर्वन्ति ।
पाशविकता-निर्घृणतादि-
समानधर्मेषु सत्स्वपि
पृथग्भूतौ, न शोभावहे ।
आत्मकर्मधर्मस्वभावान्
साधारणान् वहावो नौ।
कथमेतत् पार्थक्यं तर्हि ?
मानवाः !
वयमामन्त्रयामो युष्मान्,
आयात, शृणुतास्माकमाहुतिम्-
राष्ट्रियैक्यं नवदिशं नवमर्थं च प्रदाय
एतत् कृत्स्नं सार्थकं च सम्पादयाम ।
नवयुगनिर्माणस्य
महत्यस्मिन्नवसरे च
महार्घयोगदानमर्पयाम ।

# केचित्

# स्वकृतसंस्कृतानूदितकाव्यांशाः

डॉ0 प्रेमनारायणो द्विवेदी

## सौन्दर्यसप्तशती

प्रथमं तावद् बिहारि- कवेः 'बिहारी-सतसई' इति ग्रन्थस्य संस्कृतानुवाद उपस्थाप्यते । आरती प्रैस प्रयागतः १९७० ख्रीष्टाब्दे प्रकाशितोऽयं ग्रन्थः । अस्य कवेर्मुक्तकपद्यानां संभाव्या गुणाः चरमोत्कर्षेण समुपलभ्यन्ते। हिन्दी-साहित्येऽस्य कवेरेकैकमपि पद्यं स्फुरत्तेजोरत्नमिव प्रतिभाति । एक एव ग्रन्थोऽस्य हिन्दी-कवेः कीर्त्याधारो वर्तते ।

''बिहारीसतसई'' ग्रन्थस्य प्रामाणिकं संस्करणं यत् श्रीजगन्नाथदास रत्नाकरेण समुपस्थापितं वर्तते तदेवाश्रित्य डा0 गणपतिचन्द्रेण गुप्तेन ''लघुसंस्करणं हिन्दी टीकयोपेतं राजकमलप्रकाशन-संस्थया प्रकाशितं वर्तते तत्संख्ययैव सौन्दर्यसप्तशत्याः'' ७०० श्लोक संख्या निर्धारितास्ति।

## मङ्गलाचरणम्

गौराङ्गप्रभया यस्याः श्यामोऽपि हरितायते ।<br>
नागरी राधिका सेयं भवबाधां हरेन्मम ।। ९ ।।

## अन्ये मुक्तकाः

भूयो गच्छति तत्रैव लज्जारज्जुर्विखण्डिता ।<br>
अङ्गसौन्दर्यनद्युर्मिभ्रमिनौकेव मे मनः ।। १० ।।<br>
न श्रुत्वा मद्वचो नाथ याच्ञा मे व्यर्थिता त्वया ।<br>
मोचयित्वा गजेन्द्रं तं कृतकार्यं हि मन्यसे ।। ११ ।।

विशाले नयने त्वस्याः सेवेते कर्णकाननम् ।
कामेन मुनिना नूनं योगयुक्तिः प्रशिक्षिता ।।१३।।
सौन्दर्यधूर्तो निजनेत्रपान्थान्
भ्रान्त्या चमत्कृत्य सुहासपाशे ।
दृढं गृहीत्वाथ निहत्य निम्ने
न्यपातयत्तांश्चिबुकस्य गर्ते ।।१८।।
अमुक्ते कुण्डले त्वस्याः श्रुतिसेवापरे सदा ।
मुक्तानां समुदायस्तु नासिकाश्रयमागतः ।।२०।।
कज्जलं मस्तके दत्ते चिह्नं दृष्टिनिवारकम् ।
अहो द्विगुणिता भूत्वा मुखदीप्तिः प्रकाशते ।।२८।।
दृष्ट्वा गुरुजनमध्ये शिरसि सरोजं स्पर्शयति श्यामः ।
कृत्वा हरेः समक्षं दर्पणमर्पयति हृदये सा ।।३४।।
त्वद्विरहानलः श्याम वर्ततेऽतिविलक्षणः ।
नीरं वर्षति नेत्राभ्यां ज्वालात्यन्तं प्रवर्धते ।।३९।।
कज्जलाङ्कं मुखे वीक्ष्य स्मित्वोवाच प्रियः प्रियाम् ।
युक्तमेतत्त्वया नूनं मुखमिन्दुसमं कृतम् ।।४३।।
नयने पश्य समाये रक्ते सायकतीक्ष्णेऽस्याः ।
दृष्ट्वा लीना मीना सलिले कमलानि लज्जन्ते ।।५५।।
श्वसिति हसति विकम्पते कुप्यति झटिति लतेव वेष्टयति ।
एवं रतिरपि मुक्तिर्मुक्तिर्ज्ञेयाऽन्यथा हानिः ।।७५।।
आश्चर्यं महदाश्चर्यं न म्लाना स्नेहवल्लरी ।
ज्वालासु विरहस्यापि प्रत्यहं हरितायते ।।९८।।
अन्धकारावृते मार्गे संकीर्णे च तयोरभूत् ।
अकस्मादेव संघट्टः स्पर्शाद् ज्ञानं परस्परम् ।। २४३।।
वध्वा पाणिग्रहणे रोमाञ्चा द्वयोः स्वेदसलिलं च ।
तेन जलेन सहैव हृदयं समर्पितं द्वाभ्याम् ।।२५९।।
गोपीनामश्रुभिर्मार्गे द्वारे द्वारे गृहे गृहे ।
वहन्ति नद्यो गम्भीराः परिपूर्णा जलैरिव ।।२९३।।

सघनं कुञ्जं गगने निविडं तिमिरं ह्यसिता जलदाश्च ।
दीपशिखेव तु बाला कथं यास्यति प्रच्छन्नम् ॥२९९॥
भ्रुकुटी कुटिला चलिता दृष्टिश्चपला चलितं ललितं ते ।
पीताम्बरं च चञ्चत् सर्वं मे चोरयति चित्तम् ॥३०२॥
नहि नहि जल्पति भूयो भ्रुवौ सहास्ये च ननु तस्याः ।
एवं नहीति कथनं तद्धास्यं केवलं मन्ये ॥३२४॥
बिन्दुना वर्धते संख्या नूनं दशगुणाधिका ।
अस्यास्त्वगणितं जातं सौन्दर्यं भालबिन्दुना ॥ ३२७॥
तस्या देहे सुवर्णे च न भेदो दृश्यते मनाक् ।
भूषणानि करस्पर्शाद् ज्ञायन्ते केवलं गृहे ॥३३३॥
चक्रवाकी माघमासे दिवाकरगभस्तिषु ।
लभते रात्रिसुखं मत्वा सुधांशुं दिवसेऽपि तम् ॥ ३४२॥
शीतभयादिव शिशिरे जगति स्थितिं न लब्धवानुष्णः ।
अतः प्रियाया उच्चैरुरोजदुर्गे गतः शरणम् ॥३४४॥
सगर्वाः कुशलाः क्रूराश्चित्रकारा अनेकशः ।
सौन्दर्यचित्रणे तस्या असमर्था इव स्थिताः ॥३४७॥
दृग्बाणौः हि सुतीक्ष्णौ ते पूर्वं दृशि ततो हृदि ।
प्रविश्याथ ततोऽङ्गेषु पीडां जनयतः प्रिये ॥३४९॥
अरुणो बिन्दुर्भाले तदुपरि च विभान्ति ते घना केशाः ।
मन्ये चन्द्रं राहुः सतरणिमद्योद्यतो ग्रसितुम् ॥३५५॥
सरसे कुसुमे गुञ्जति न तत्रोपविशति भीत्यासौ ।
सुकुमारतां च दृष्ट्वा स्पृशति न मुग्धो ह्यतिस्नेहात् ॥३६९॥
शरीरे दुष्टता यस्य संमानं तस्य जायते ।
सौम्या ग्रहा न पूज्यन्ते क्रूराणां तु जपादिकम् ॥

## श्लोकावलिः

''श्लोकावलिः'' इति नाम्ना श्री कवेस्तुलसीदासस्य कृतिर्दोहावली अनूदिता वर्तते । अस्मिन् ५४३ श्लोकाः सान्ति । अप्रकाशितेयं कृतिः ।

अनुवादे 'गीताप्रेस गोरखपुर' संस्करणं गृहीतमस्ति । अनूदिताः श्लोकाः केचित् प्रदीयन्ते-

श्रीजानकी यस्य विभाति वामतः श्रीलक्ष्मणो दक्षिणतश्च राजते ।
ध्यानं च कल्याणकरं तु यस्य वै स एव रामस्तुलसीसुरद्रुमः ॥१॥
निर्गुणो हृदये भाति सगुणश्चैव नेत्रयोः ।
जिह्वायां रामनामैव रत्नं पुरटसंपुटे ॥७॥
अङ्कस्तु रामनामैव शून्यमन्याश्च युक्तयः ।
गतेऽङ्के न करे किञ्चिदङ्के दशगुणं भवेत् ॥१०॥
जपन्तो जिह्वया नाम धार्मिकाः सुखिनोऽभवन् ।
विनष्टा अलसाः सर्वे श्वो वाद्य तुलसीमते ॥१२॥
दीनबन्धोश्च तन्नाम राज्यं भक्ताय यच्छति ।
न जहाति निजाभ्यासं मनश्च मलकीटवत् ॥१३॥
रसो हि भर्ता रसना च पत्नी दन्ताश्च दासा भवनं तथास्यम् ।
वर्णौ च बालौ गिरिशप्रियौ द्वौ स्नेहश्च संपत्तिरवर्णनीया ॥२४
यथा बीजमयी भूमिर्नभस्ताराश्रयं यथा ।
तुलसी वेत्ति नामैव सर्वधर्ममयं हरेः ॥२९॥
अनाद्रवत्तद्धृदयं विदीर्यतां विनश्यतामश्रु विना विलोचने ।
ज्वलेच्च तन्नोत्पुलकं च यद् वपुः न यत्र रामस्मरणं कदाचन ॥४१॥
चरन्ति वृक्षान् हरितान् मृगाद्याः प्रज्वाल्य शुष्कांश्च जनास्तपन्ति ।
प्रसार्य हस्तौ फलितान् प्रयान्ति स्वार्था ध्रुवं दाशरथिः परार्थः ॥५२॥
दूरे दीर्घा शिरस्थे च भानौ छायेव पादगा ।
वर्धते क्षीयते माया हरौ दूरे हृदि स्थिते ॥७६॥
हित्वा कल्पद्रुमं रामं नीरसं कलिपादपम् ।
भजन्तो स्वार्थमिच्छन्ति मोक्षं चैव मृषा नराः ॥७६॥
गेहेषु भिक्षिता ग्रासा पादावर्चन्ति भूमिपाः ।
तदा रामं विना सर्वमद्य रामः सहायकः ॥१०९॥
रामात् समधिकं रामभक्तं जानीहि तत्त्वतः ।
रङ्कजान् भूपती रामो हनूमान् धनवानभूत् ॥१११॥

स शुचिः सच्चिदानन्दकन्दो भानुकुलध्वजः ।
संसारसिन्धुसेतुश्च कुरुते नरचेष्टितम् ।।११६।।
कः कौशलेशेन समोऽस्ति भूतले
प्रभुः शरण्यो निजभक्तपालकः।
विभीषणो बन्धुभयात्समागतो
व्यनाशयत् सोऽस्य दरिद्रतां हरिः ।।१६०।।
जानकीचरणौ नत्वा स्मृत्वा नाम शुभं स्त्रियः ।
भर्तरि प्रेम संप्राप्य भवन्ति पतिदेवताः ।।२१४।।
भुजतरुविवरे रोगव्यालो बलात् प्रविष्टो विषदंष्ट्रः ।
अयि गरुडासन शीघ्रं निष्कासय दुःखनाशाय ।।२३५।।
अज्ञानेन विना ज्ञानं प्रकाशं तमसा विना ।
सगुणेन विना ब्रूयान्निर्गुणं यः स मे गुरुः ।।२५१।।
दीपशिखेव युवत्या देहो न भव शलभो मनस्तत्र ।
त्यक्त्वा मदं सकामं भजस्व रामं कुरुष्व सत्सङ्गम् ।।२६९।।
चराणामचराणां च जीवानां जलदो हितः ।
हृदि नैसर्गिकः स्नेहश्चातकस्य घनं प्रति ।।२९४।।

## 'वैराग्य-सन्दीपनी''

तुलसीकृतायां वैराग्यसंदीपिन्यां केवलं द्वाषष्टि "दोहाः" सन्ति । तावन्त एव श्लोकाः संस्कृते रचिताः सन्ति । तेषु केचित् विदुषां समक्षमुपस्थाप्यन्तेः-

गुणौघकोटिभिर्मोहघनध्वान्तो न नश्यति ।
विकासं नैति हृत्पद्मं रविवंशरविं विना ।।२।।
अयःकपालवद् देहस्त्रितापैस्तप्यते सदा ।
रामप्रतापतः शान्तिस्तथा शान्तिपदं शुभम् ।।६।।
शिलावत् काष्ठवद् वामा मन्यन्ते हेम लोष्ठवत् ।
प्रविस्मृतैहिकरसा रामरूपा हि सज्जनाः ।।२८।।
लभ्यन्ते विरलाः सन्तस्त्यक्तमायामनोरथाः ।
केकिन्यः केकिनोऽनन्ताः कामिनः कुटिलाः कलौ ।।३२।।

श्वपाकः स वरं रामं भजते यो दिवानिशम् ।
महान्वयेन किं तेन यत्र नाम हरेर्नहि ।।३८।।
लोकद्वयसुखत्यागी रक्तो नाम्न्येव केवले ।
पृथग् वसति दासोऽयं दुःखाग्नौ न च दह्यते ।।४२।।
सुधांशुर्भूषणं रात्रेर्भानुर्दिवसभूषणम् ।
भक्तस्य भूषणं ध्यानं त्यागो ध्यानविभूषणम् ।।
ज्ञानस्य भूषणं ध्यानं त्यागो ध्यानविभूषणम् ।
त्यागस्य भूषणं शान्तिपदं निष्किल्विषं शुचि ।।४३
अहंकारानले नित्यं सर्वं ज्वलति वै जगत् ।
रक्षितः केवलं साधुः शान्त्याधारः सदैव च ।।५३।।
स ज्ञानी स गुणी लोके दाता ध्याता स एव हि ।
रागद्वेषमहाहानिर्यस्याभून्निजमानसे ।।५९।।

## ''श्रीमद्रामचरितमानसम्''

अयं ग्रन्थः हिन्दीभाषाकविभूषणस्य श्रीमतस्तुलसीदासस्य ''श्रीरामचरितमानस'' ग्रन्थस्य अनुवादो वर्तते। अस्मिन् नव सहस्राणि श्लोकाः सप्त काण्डाः प्रतिकाण्डञ्च सर्गा रचिता विद्यन्ते । ''दोहा'' संख्यापि दत्ता वर्तते ।

अस्मिन्ननुष्टुबार्योपेन्द्रवज्रेन्द्रवज्रेन्द्रवंशावंशस्थोपजातिशालिनी-मालिनीस्रग्विणीभुजङ्गप्रयाततोटकवसन्ततिलकाशिखरिणीशार्दूलविक्रीडितस्रग्धरादिप्रख्यातछन्दसां प्रयोगो भावानुसारं विहितो वर्तते । यथासंभवं कवेर्भावरक्षार्थं शब्दा अपि यथावद् गृहीता सन्ति । अयमिदानीमप्रकाशित एव वर्तते ।

अस्यानुवादस्य प्रयोजनं तु निजकृते मङ्गलाचरणे हनुमत्प्रार्थनावसरे प्रकटितमस्ति यथा-

त्वत्कृपया विरचितवान् यत्तु रामचरितमानसं तुलसी ।
तस्मिन् स्नातुं वाञ्छा स्नापय मां तापनाशाय ।।
लोकेभ्यः समायच्छद् यदमृतं स लोकभाषायाम् ।

सुरवाणीसंपुटितं कीदृङ् मधुरमिति वेत्तुमिच्छामि ॥
लोको हसतु न हानिर्ममास्ति लाभः स प्रत्यक्षः ।
रामो भवेद् दयार्द्रो मयि यदि मम जन्मसाफल्यम् ॥
मनस्येवं विनिश्चित्य प्रवृत्तः कठिनेऽप्यहम् ।
भवेद् यदि कथा सूक्ता मन्ये मयि कृपा हरेः ॥

## कविकृताः स्तुतयः-(बालकाण्डारम्भे प्रथमे सर्गे)

करिवररुचिरास्यो नायको यो गणानां
शुभगुणसदनं यो बुद्धिराशिर्विशुद्धः ।
हृदि सपदि यदङ्घ्रिध्यानमात्रेण सिद्धि-
र्विदधतु विबुधाग्र्योऽनुग्रहं स प्रसन्नः ॥१॥
भवन्ति मूका अपि सिद्धवाचो विलङ्घयन्ते किल पङ्गवोऽपि ।
महागिरीन् यत्कृपया स देवो द्रवेद् दयालुः कलिकल्मषघ्नः ॥२॥
नीलसरसिजश्यामस्तरुणारुणरुचिरवारिरुहनयनः ।
करोतु मम हृदि वासं सततं क्षीराब्धिशयनीयः ॥३॥
यो वै स्निह्यति दीने करुणार्णवः स उमारमणः ।
कुन्देन्दूज्जवलदेहो दयतां मयि मदनमर्दनः शम्भुः ॥४॥
नौमि गुरोः पदकञ्जं करुणार्णवस्य हरेर्नृरूपस्य ।
यस्य वचोऽर्कमयूखैर्नष्टः स महामोहतमःपुञ्जः ॥५॥
तत्पदपद्मपरागं सरसं सुरभिं च सानुरागं च ।
अमृतमूलजं चूर्णं वन्दे भवरुङ्निकरशमनम् ॥६॥
मधुमुदमङ्गलदात्रीं विमलविभूतिं च सुकृतिशम्भुतनोः ।
मनोमुकुरमलहर्त्रीं गुणवशकर्त्री वन्दे पद्धूलिम् ॥७॥
तत्पदनखमणिदीप्तेः स्मरणाद् भवति हृदि दिव्यदृष्टिः सा ।
उदेति कृतिनां भाग्यात् सर्वं च नाशयति मोहतमः ॥८॥
स्वान्तर्नेत्रे विमले भवरजनीदोषदुःखनाशश्च ।
रामचरितमणिनिकरा विविधा गुप्ताः प्रकाशमायान्ति ॥९॥
सिद्धा सिद्धाञ्जनं दृष्टौ कृत्वा युक्त्या सुसाधकाः ।

भूवनाद्रिषु संपत्तिं स्थितां पश्यन्ति कौतुकात् ।।१०।।
गुरुपदधूलिजमेतन्मृदुदृग्दोषघ्नमञ्जनं रुचिरम् ।
प्रयोज्य मञ्जुलदृष्टी रामचरितमानसं विदधे ।।११।।

## सत्सङ्गतिः

ज्ञानं न सत्सङ्गतिमन्तरेण नास्त्येव रामस्य कृपां विना सा ।
सत्सङ्गतिर्मङ्गलमोदमूलं सिद्धिः फलं साधनमस्ति पुष्पम् ।।२२।।
सङ्गाद् विशुद्ध्यन्ति शठाः कुधातवः इव स्वयं स्पर्शमणेः प्रभावतः ।
न ते कुसङ्गेऽपि गुणांस्त्यनन्ति हि सन्तः फणीनां मणयो निजानिव।।२३

## द्वितीयसर्गे खलाः

वन्दे खलाँस्तान् शुभभावयुक्तो हेतुं विना दक्षिणवामतो ये ।
लाभश्च येषां हि परार्थहानौ शोको निवासेऽतिसुखं विनाशे ।।१।।
हरिगिरीशयशःशशिराहुवदपकृतौ च सहस्रभुजा इव ।
प्रतिपलं परदोषनिरीक्षणे नयनपुञ्जसहस्रयुता इव ।।२।।
परहितात्मकसर्पिषि यन्मनो भवति संपतनाय हि मक्षिका ।
प्रखरतेजसि ते च कृशानुवात् क्रुधि कृतान्तसहस्रसमाश्च ते ।३।।
अवगुणाघधना धनपा इव परहिताय नवोदितकेतवः ।
अविरतं शयनाय च तत्पराः दशमुखानुजवज्जगतीतले ।।४।।
परविनाशकृते स्वतनुत्यजः कृषिविहन्तृहिमोपलकर्कशाः ।
कुपितशेषसमान् प्रणमामि तान् मुखसहस्रयुतानघवर्णने ।।५।।

## सङ्गः

धूमः कुसङ्गात्खलु कज्जलं स्याल्लिखन्ति मष्या मुनयः पुराणम् ।
स एव वातानलसंप्रयोगाद् धाराधरो जीवनदायकः स्यात् ।।२५।।

## तृतीयसर्गः

विनयः एक पञ्चाशत् श्लोकेषु कृतोऽस्ति तत्र केचित्-
श्रीरामचन्द्रान्वयवर्णनेच्छा स्वल्पा मतिर्मे चरितं गभीरम् ।
एकोऽप्युपायो न च मे सुलभ्यो राज्ञां स्पृहासौ कृपणं मनश्च ।।१।।

मतिः सुनीचा रुचिरुच्छ्रिता च वाञ्छा सुधायाः सुलभं न तक्रम् ।
धाष्ट्र्यं क्षमिष्यन्ति हि सज्जनास्ते श्रोष्यन्ति तें बालवचोऽनुरागात्
॥२॥

स्खलत्पदं बालवचो निशम्य स्वभावतः स्तः पितरौ प्रसन्नौ ।
क्रूरा हसिष्यन्ति कुबुद्धयो ये वक्राः सदा दूषणभूषिताङ्गाः ॥३॥
कृतं स्वकाव्यं रुचिरं न कस्मै स्यान्नीरसं वा सरसं च तद्वा ।
श्रुत्वा परोक्तिं च मुदान्विता ये नरोत्तमास्ते विरला जगत्याम् ॥४॥
सरित्सरोभिः सदृशा अनेके निजाम्बुवृद्ध्या स्वयमाप्लवन्ते ।
वर्धन्त इन्दुं समवेक्ष्य पूर्णम्बोधितुल्याः सुजनास्तु केचित् ॥५॥
क्षुद्रं तु भाग्यं महती ममाशा विश्वास एको हृदि विद्यते मे ।
श्रुत्वा गमिष्यन्ति मुदं सुसन्तः खला हसिष्यन्ति वृथाप्रयासाः ॥६॥
(दोहा ८ )

हास्यात् खलानामहितं न किञ्चित् पिकध्वनिः काकमते कठोरः ।
हंसान् वकाश्चातकमेव भेकाः साधोः सुवाणीं च खला हसन्ति ॥७॥
श्रीः सा सुकीर्तिर्भणितिः शुभा सा गङ्गेव सा सर्वहिताय लोके ।
श्रीरामचन्द्रो रमणीयकीर्ती रूक्षा मदुक्तिस्त्विति मे विचिन्ता ॥४६॥
सुलभं मे च तत्सर्वं भवतां कृपया ध्रुवम् ।
सीव्यन्ते शणपट्टेषु खलु कौशेयतन्तवः ॥४८॥ (दोहा १३)
काव्यं न बुद्धिं विमलां विना स्यात्
मय्यस्ति तद्धीबलमल्पमेव ।
तस्मात् कृतज्ञाः कृपयन्तु येन
हरेर्यशोवर्णनतत्परः स्याम् ॥५०॥ (दो0 १४)

## रामकथा

अनेकशः श्रीगुरुणा तदोक्तां
प्रज्ञानुरूपं हृदयं प्रविष्टाम् ।
स्वान्तःप्रतोषाय मनोहरां ता
नम्रो निबध्नामि च लोकवाण्याम् । १/६/८ (दोहा ३०-३१)

संदेहमोहभ्रमदर्पहर्त्री भवापगायास्तरणीं विशालाम् ।
प्रज्ञाविवेकानुगतः कथां तां वक्ष्ये निजान्तर्हरिणेर्यमाणः ॥
विश्रान्तिरूपां विदुषां जनानामाह्लादकर्त्री कलिकल्मषघ्नीम् ।
मत्तां मयूरीं कलिपन्नगेभ्यः पुनर्विवेकाग्न्यरणिं पवित्राम् ॥
कलौ कथैषाखिलकामदायिनी विभीतिहर्त्री भ्रमभेकसर्पिणी ।
वसुन्धरायां च सुधातरङ्गिणी दिव्यौषधिर्जीवनशक्तिदायिनी ॥
सुरारिसेना निरयौघनाशिनी दुर्गेव देवी सुरसाधुरक्षणे ।
सतां समाजाम्बुधिसौख्यदा रमा क्षमेव पृथ्वीभरधारणे क्षमा ।
तुलसीव सदा रामप्रिया परमपावनी ।
तुलसीदासमाङ्गल्यकार्यार्थं हुलसीव सा ॥
शिवप्रिया मेकलकन्यकेव या सिद्धिसम्पत्तिसुमोददात्री ।
अम्बाऽदितिः सद्गुणदेवतानां या प्रेमभक्त्योश्च मितिः पवित्रा ॥

१/६/९-१५

## विवाहसमये शिवस्वरूपम्

### शिव-शृङ्गारः

चर्माम्बरं भस्म कलेवरे च भुजङ्गमैः कङ्कणभूषणानि ।
व्यालैर्जटाभिर्मुकुटं विधाय गणाः शिवं भूषयितुं प्रवृत्ताः ॥
मन्दाकिनीं मूर्ध्नि विधुं च भाले नेत्रत्रयं व्यालकृतोपवीतम् ।
कपालमालामशिवां विषं च गले दधानोऽपि सदा शिवोऽयम् ॥
धृत्वा त्रिशूलं डमरुं च वाद्यैर्वृषं समारुह्य शिवः प्रतस्थे ।
सुरस्त्रियो वीक्ष्य हसन्ति सत्यं सृष्टौ वधूर्नास्ति वरानुरूपा ॥

१/१२/१४-१६

नग्नो व्याली कपाली विकटतनुधरो भस्मलिप्तो जटावान्
भूतैः प्रेतैः पिशाचैः सह कुटिलमुखैर्योगिनीभिश्च याति ।

जीवेद् दृष्ट्वा य एतान् स भवति सुकृती पुण्यवान् वै गृहेषु
दिव्यं द्रक्ष्यत्युमायाः स खलु परिणयं बालकैरेवमुक्तम् ।

१/१२/३६(दोहा ९५)

## मेना वरं दृष्ट्वा गौरीमङ्के कृत्वा सचिन्ता ब्रवीति-

धाता मूकं वरं किं जडमतिरसृजत्ते सुरूपं वितीर्य
योग्यं कल्पद्रुमे यत् सुरसमयफलं तच्च बर्बूरकेऽदात् ।
त्यक्ष्यामब्धौ त्वयासून् महति हुतवहे पर्वताद् वा पतित्वा
नश्येद् गेहं यशो वा त्रिजगति विततं त्वां च नोद्वाहयिष्ये ।

१/१२/४३

## गौरी मातरमाश्वासयन्ती जगाद-

मा मा मातः कलङ्कं वह न च रुदिहि त्वं न कालः स एष
भाले दुःखं सुखं वो यदपि विलिखितं प्राप्यते प्राणिभिस्तत् ।।
श्रुत्वा नम्रं भवान्या अतिमृदु वचनं योषितः शोकपूर्णा
ब्रह्मण्यारोप्य दोषान् बहुविधमबला अश्रुनेत्र्यो भवन्ति ।।

१/१२/४९

## शतरूपया सह मनोर्विष्णुदर्शनम्

नीलसरसिजश्यामः सुनीलमणिनीलनीरधरश्यामः ।
विलोक्य यत्तनुशोभां मनसिजशतकोटयो विलज्जन्ते ।।
शोभावधिः शारदचन्द्रवक्त्रः सुकम्बुकण्ठः सुहनूकपोलः ।
सुदन्तनासो रुचिराधरोष्ठो विनिन्दितेन्द्वंशुसमूहहासः ।।
नवाम्बुजाङ्गो ललितेक्षणश्च मनोजचापभ्रुकुटीमनोज्ञः ।
नक्राभसत्कुण्डलवान् किरीटी श्रीखण्डसंपूजितदिव्यभालः ।।
यो वन्यमाली मणिभूषणाढ्यः सुकुन्तलो हीरकहारशोभी ।
रुक्माङ्गदः केसरिकन्धरश्च श्रीवत्सलक्ष्मा सितसूत्रधारी ।।

हस्तिहस्तमहाबाहुस्त्रिबलीशोभितोदरः ।
धनुर्बाणनिषङ्गाढ्यः संस्फुरत्तडिदम्बरः ।।
निन्दितयमुनावर्ता नाभिर्यस्य मनोहरा ।
अवर्णनीया पादाब्जशोभा यत्र मनांसि च ।।
वसन्ति मुनिभृङ्गाणां मत्तानामिव सर्वदा ।
आदिशक्तिर्जगद्धतुर्यद् वामे प्रविराजते ।।
उत्पद्यन्ते यदंशांशाद् ब्रह्माण्यः कमला उमाः ।
सृष्टिर्यद् भ्रूविलासाच्च सा सीता जगदीश्वरी ।

१/१९/३३-४०

## रामबाललीला

व्यापकं निर्गुणं ब्रह्म निर्विशेषं निरञ्जनम् ।
कौसल्याङ्के च तत् प्रेमवशं क्रीडत्यजं हि तत् ।।
सुनीलाम्बुजगम्भीरवारिदश्यामविग्रहः ।
कन्दर्पकोटिलावण्यसौन्दर्यस्येव सागरः ।।
दीप्तिमन्तो नखा यस्य सरोजारुणपादयोः ।
विराजन्ते महामुक्ता इव पद्मपलाशयोः ।।
वज्राङ्कुशध्वजारेखारम्याङ्घ्र्योर्नूपुरध्वनिम् ।
श्रुत्वा मनांसि मुह्यन्ति मुनीनां ज्ञानिनामपि ।।
रेखाभिरुदरं चास्य तिसृभिः शोभतेतराम् ।
सुरम्यं नाभिगाम्भीर्यं जानन्ति कृतदर्शनाः ।।
विशालौ मञ्जुलौ बाहू अङ्गदादिविभूषितौ ।
पञ्चाननखज्योतिर्वक्षसि प्रविराजते ।।
विप्रपादाङ्कितं वक्षो रत्नहारविराजितम् ।
शोभते कम्बुकण्ठोऽस्य हनुशोभाप्यनुत्तमा ।।
कन्दर्पकोटिमाधुर्यदीप्तिसुद्योतिताननः ।
मञ्जुदन्तच्छदारुण्यं द्वौ द्वौ दन्तौ लघू शुची ।।
को वा वर्णयितुं शक्तो तिलकं नासिकामुत ।

कपोलौ कोमलौ चारू श्रवणावतिमञ्जुलौ ।।
अस्पष्टाक्षरसंयुक्तं सहासं कलभाषणम् ।
स्निग्धा आकुञ्चिता केशाः सूक्ष्मा मातृविभूषिताः ।।
पीतं वासो धृतं क्षौमं महार्हं श्यामविग्रहे ।
चलनं जानुपाणिभ्यां मह्यं मनसि रोचते ।।
श्रुतयः शारदाः शेषा रूपं वक्तुमनीश्वराः ।
स्वप्नेऽपि येन संदृष्टं स हि जानाति तत्परः ।
आनन्दसिन्धुर्विमलो विमोहो वितर्कवाणीन्द्रियबुद्ध्यतीतः ।
स दम्पतीस्नेहवशः पवित्रास्तनोत्यतुल्याः खलु बाललीलाः ।।

१/२५/७-१९ (दोहा १९६-१९८-बालकाण्डे)

धूलिधूसरसर्वाङ्गो यदाऽऽयाति स्मिताननः ।
विहस्य भूपतिर्हृष्टो निजोत्सङ्गे दधाति तम् ।।
भुञ्जंश्चपलचित्तोऽयं दध्योदनमुखो हसन् ।
संप्राप्तावसरः शीघ्रं धावतीतस्तो लघु ।।

१/२५/४०-४१

## गौतमस्त्रीसमुद्धारः (दोहा २११)

यत्पादाब्जात्पवित्राऽभवदमरसरिद् यां शिवोऽधात्स्वमूर्ध्नि
यं ब्रह्मा हृद्युपास्ते मम शिरसि दधौ राघवोऽनुग्रहात्तम् ।
एवं स्वानन्दमग्ना वरमभिलषितं प्राप्य सा गौतमस्त्री
भूयो भूयः पतित्वा हरिचरणयुगे प्राप लोकं स्वंपत्युः ।।

१/२६/४२

## जनकपुरवध्वो रामक्ष्मणसौन्दर्य विलोक्य मिथः कथयन्ति-

शोभानिधी द्वौ वयसा किशोरौ सुश्यामगौरौ सुखधाम सख्यः ।
प्रत्यङ्गमाल्यः शतकोटिकामाः समर्पिताश्चेदनयोर्न भूरि ।।



१/२७/५२ (दोहा २२०)

## रामः सीतां पश्यति-

करोति सौन्दर्यमपीव सुन्दरं छवेर्गृहे दीपशिखेव सूज्ज्वला ।
विदेहजासावुपमीयते कथं सर्वोपमास्ताः कविभिर्निषेविता।।

१/२८/३९

चकोरीव चतुर्दिक्षु तन्वङ्गी जनकात्मजा ।
कुमारौ नृपतेः सद्य क्व यातावि‍ति चिन्वती ।।
वीक्षते यत्र यत्रैव मृगशावकलोचना ।
वर्णन्तीव सिताम्भोजपङ्क्तयस्तत्र तत्र वै ।।

१/२८/४६-४७ (दोहा २३१)

## रामं विलोक्य सीतायाः स्थितिः-

नेत्रे निमग्ने रघुनाथरूपे स्थिराणि पक्ष्माणि जहुर्निमेषान् ।
श्रमश्लथा पश्यति सानुरागा मुग्धा चकोरीव शरत्सुधांशुम्।।

१/२८/४९

प्रवेश्य रूपं हृदि नेत्रमार्गान्नेत्रच्छदाप्रत्तबृहत्कपाटाम् ।
सीतां दृढप्रेमवशामवेत्य ह्रिया न सख्यो गदितुं समर्थाः ।।
आविर्भूतौ तदाकस्माद् भ्रातरौ तौ लतागृहात् ।
नीरन्ध्रजलदव्रातात् सुधांशू इव निर्मलौ ।।
शीलशौर्यसुषमावधी उभौ नीलपीतजलजाभसुन्दरौ ।
केकिपिच्छसुमगुच्छकोरकैर्मञ्जुलैः कृतशिरोविभूषणौ ।।

१/२८/५०-५२ (दोहा २३२)

## सीतायाः पुनः परावृत्य प्रेक्षणम्-

विटपविहङ्गकुरङ्गावेक्षणमिषात् परावर्तते भूयः ।
दर्शं दर्शं रघुपतिकान्तिं प्रीतिर्विवर्धतेऽत्यर्थम् ।। १/२८/६१

## सीताकृता गौरीस्तुतिः

जयतु जयतु गौरी क्ष्माधराधीन्द्रकन्या
जयतु जयतु शम्भोराननेन्दौ चकोरी।

द्विरदवदनमाता षण्मुखस्याखिलस्य
जयतु जयतु विद्युद्दीप्तिगात्री विधात्री ।।
न कि हिमपि जनन्या आदिमध्यावसानं
नहि नहि खलु वेदा जानते त्वत्प्रभावम् ।
भुवनजननरक्षासंयमानां विधात्री
विहरसि निजतन्त्रा मोहयन्ती जगच्च । १/२८/६४-६५

## उद्वाहानन्तरं सीता रामं पश्यति -

विकासितान्तःकरणा तु जानकी विलज्जिता पश्यति राघवं शनैः ।
विलोचने स्नेहसुधापिपासुनी मनोहरे मीनरुचिं निगूहतः ।
१/४२/१८ (दोहा ३२६)

## वनगमनसमये सीतोक्तिः-

परिजनो विहगा हरिणा वनं सुनगरं शुचिवल्कलमंशुकम् ।
विबुधसद्मसमा प्रभुसन्निधौ सुखकरी मम पर्णकुटी सदा ।।
२/७/४३ (दोहा ६५)

क्षणे क्षणे वीक्ष्य पदारविन्दं श्रान्तिं न यास्यामि वने चलित्वा ।
स्नेहेन भूयः कृतभर्तृसेवा श्रमं हरिष्ये तव मार्गजातम् ।। २/७/५०
कृत्वासनं समतले तृणपर्णदर्भै-
र्दासी निपीड्य चरणौ निशि तत्पराहम्।
कान्तिं मुखस्य रमणीयतमां विलोक्य
वत्स्यामि तापरहिता तव पादपद्मे ।।
त्वया सार्धं नरश्रेष्ठ मां च सिंहवधूमिव ।
शृगालः शशको वापि तत्र को द्रष्टुमर्हति ।। २/६/५२-५३
एवमन्यकाण्डेषु विविधा मनोहराः प्रसङ्गाः सन्ति
विस्तरभयादत्रैव विरामः क्रियते । ( प्रे0 न0 द्विवेदी )

## श्रीतुलसीकृतकवितावल्याः अनेकाः कविता

अनूदिताः सन्ति, तासु काचिद्-

प्रातः प्राप्ता ह्ययोध्यां दशरथभवने निर्गतोऽङ्के स नीत्वा
सूनुं शोकापनोदं स्वमनसि मुदिता वीक्ष्य जाता तदानीम् ।
यन्नेत्रे खञ्जरीटद्विजशिशुरुचिरे रञ्जिते स्वञ्जनेन
मन्ये द्वे नीलकञ्जे शशिनि विकसिते नूतने आलि रम्ये ।।१।।
मुक्तामालास्य कण्ठे करचरणयुगे कङ्कणे किङ्किणी च
नीलाङ्गे पीतवासो लसति पुलकितः पार्थिवोऽङ्के निधाय ।
सानन्दौ यन्निपीय नयनमधुकरावाननाम्भोजसारं
बालोऽसौ मानसे चेन्न वसति तुलसी जीवनं वीतसारम् ।। २।।
देहैर्नीलोत्पलाभैः श्रवणविकिसतैर्लोचनैर्निन्दिताब्जै-:
र्धूलीभिर्धूसराङ्गैर्मनसिजसुषमां मञ्जुलैर्दूरयन्तः ।
दन्तैर्विद्युत्सदृक्षैर्मधुरविहसितैर्बाललीलां दधाना
नित्यं क्रीडन्त्ययोध्यानरपतितनुजाश्चित्तगेहे तुलस्याः ।।३।।
दन्ताली कुन्दपाली ह्यधरकिसलयोद्घाटने पङ्क्तिबद्धा
मुक्तामाला महार्घा जलधरनिकरे विद्युदाभा विभान्ति ।
लम्बेते कुण्डले यत्सरसिजवदने सुन्दरे यत्कपोले
प्राणास्तद्बालवाण्यां वितरति तुलसी वीक्ष्य सर्वं समर्प्य ।।५।।
उर्वी गुर्वी सकम्पा सगिरिजलनिधिर्घूर्णिता दिग्गजेन्द्रा
दिक्पाला व्याकुलाक्षा भुवि च निपतितोऽवाङ्मुखो रावणश्च ।
शेषः सक्रोडकूर्मो विचलति स शिवो विस्मितो पद्मयोनि-
र्ब्रह्माण्डं चण्डशब्दो विशति शिवधनुः खण्डितं राघवेण ।।११।।
रम्ये हर्म्ये वधूः सा जनकनृपसुता रामचन्द्रो वरश्च
नार्यो माङ्गल्यगीतं द्विजयुवकजना ब्रह्म गायन्ति तारम् ।
सीता स्वाभूषणस्थं विकसितनयना वीक्षते रामरूपं
सर्वं विस्मृत्य भावं न हि चलति तदा निर्निमेषं स्थिता च ।।१८।।

## प्रसादस्य ''खोलो द्वार'' कविताया अनुवादः

''द्वारं नाथाभय वरद हेऽनावृतं देहि शीघ्रम् ।''
नीहाराणां सुशिशिरकणैः कम्बलं क्लिन्नमेतत्



शीतस्फीतः प्रवहतितरां गन्धवाहः प्रतीच्याः ।

आर्द्रीभूतः खलु सुरुचिरः केशपाशो रजन्या
द्वार्यागत्य स्पृश रविकरेणारुणेनेव नाथ ।।१।।
धूल्या म्लानौ खलु मम पदौ कण्टकाग्रैश्च विद्धौ
भ्रान्त्वा भ्रान्त्वा कथमपि तव द्वारमत्रागतोऽस्मि ।
नो भेतव्यं तव न मलिनं मन्दिरं संविधास्ये
प्रक्षाल्यैतौ नयनसलिलैरागतोऽहं विशुद्धः ।।२ ।।
पङ्कैः क्लिन्नौ यदि मम पदौ नो जुगुप्सा विधेया
मत्तुल्यानां तव पदयुगे नाथ कुत्रावकाशः !
निश्चेष्यामि स्वपदमनघं पादलग्नस्तवैव
प्राप्य द्वारं तव गतभयं नैव हास्यामि नूनम् ।।३ ।।
द्वारं नाथानावृतं देहि तस्माद् रम्यं रूपं दर्शयानामयं तत् ।
नश्येद् दुःखं तद्रजन्या अपारं भूयान्नूनं सुप्रभातं ममापि ।।४।।

0 0 0

एवं-रहीम-कबीर-नारायण महादेवी वर्मा-प्रसाद-मैथिलीशरणगुप्त-माखनलाल चतुर्वेदी-निरालादि-कवीनां शतशः काव्यांशाः संस्कृतेऽनूदिताः सन्ति । इदानीं कतिपया एव काव्यांशा भवत्समीपममिनन्दनग्रन्थे प्रकाशनार्थं प्रेष्यन्ते । समित्या क्षम्योऽस्मि ।

डा0 प्रेमनारायणो द्विवेदी

सागरः

१५.११.१९९० ई.

# गैर्वाणीकवयो वन्द्याः

डॉ0 श्रीधर भास्कर वर्णेकरः 'प्रज्ञाभारती'

।।श्रीः।।

१. इदं कविभ्यः सर्वेभ्यो नमोवाकं प्रशास्महे।
कालिदासपुरीमेतां समेतेभ्योऽतिनिष्ठया।।

२. दुर्लभं मानुषं जन्म कवित्वं तत्र दुर्लभम्।।
गीर्वाणवाण्यां तत्रापि तत् सम्प्रत्यतिदुर्लभम्।।

३. यशसेऽर्थकृते वाऽपि काव्यं संस्कृतगुम्फितम्।
न कल्पतेऽधुना राष्ट्रे कालिदासमहाकवेः।।

४. तथापि संस्कृतां वाणीं स्वराज्ये समुपेक्षिताम्।
परया श्रद्धयाऽऽश्रित्य ये कवित्वं वितन्वते।।

५. ते नूनं कर्मयोगस्य भवन्त्यद्य निदर्शनम्।
गैर्वाणीकवयो वन्द्या अत एव भवादृशः।।

६. स्वान्तःसुखाय प्रतिभा विलासं तनुते सताम्
गीर्वाणवाणीनिष्ठानां कवीनामधुना तथा।।

७. अतः स्वान्तःसुखायैव,नार्थाय यशसेऽथवा।
काव्ययोगं साध्नुवद्भ्यो नमोवाकं प्रशास्महे।।

८. पठन्तु प्रस्फुटोद्गारं गायन्तु मधुरस्वरम्।
भवन्तोऽत्र स्वकं काव्यं परनिर्वृतये सताम्।।

९. महाकालपुरे ह्यस्मिन् पुरा प्रीत्या निवासिनः।
मोदेताव्यक्तचैतन्यं ध्रुवं तस्य महाकवेः।।

१०. श्रीकालिदास त्वदमूर्तमूर्तिम्
अत्रोज्जयिन्यां परितश्चरन्तीम्।।
सद्भावना वाक्कुसुमैः किरन्ति
ह्याचारलाजैरिव पौरकन्याः।।

११. आवाहयामः सर्वेऽमी त्वकाव्यमधुलम्पटाः ।
कवीनां समवायेऽस्मिन् एहि देहि कृपाशिषः।।

१२. मन्दः कवियशःप्रार्थी गुरो कविजनो ह्ययम्।
कृपाकटाक्षपातेन भगवन् अनुगृह्यताम्।।

(रचनातिथिः २१.११.१९९१ रचनास्थानम्-उज्जयिनी)

शुक्ल -रचनाः[1]

# दूरदर्शने प्रस्तुतं 'भाति मे भारतम्'

(प्रणेता, निर्देष्टा-डा० रमाकान्त शुक्लः)

भाति मे भारतम्, भाति मे भारतम् ।
भूतले भाति मेऽनारतं भारतम् ।। ध्रुवपदम् ।।

## प्रथमो भागः

विश्वबंधुत्वमुद्घोषयत्पावनं विश्ववन्द्यैश्चरित्रैर्जगत्पावयत् ।
विश्वमेकं कुटुम्बं समालोकयद् भूतले भाति मेऽनारतं भारतम् ।।
क्रुद्धहिंसाबले क्वास्त्यहिंसाजयः? कुत्र मुच्येत बद्धश्च मामन्तरा ?
प्रश्नमित्थं जगत्सम्मुखे स्थापयद् भूतले भाति मेऽनारतं भारतम् ।।
वेशभूषाशनोपासनापद्धति- क्रीडनामोद-संस्कार-वृत्त्यादिषु ।
यद्धि भिन्नं सदप्यस्त्यभिन्नं सदा भूतले भाति तन्मामकं भारतम् ।। ध्रुव० ।
दुःखपूर्णं जगत्सौख्यपूर्णं भवेद् यस्य रम्योपदेशैः सुधापूरितैः ।
जङ्गले मङ्गलं यच्च कर्तुं क्षमं भूतले भाति तन्मामकं भारतम् ।।
यत्र पुण्याय मान्यं परेषां हितं यत्र पापाय पीडा परेषां मता ।
यत्र सत्यं जयं याति नैवानृतं भूतले भाति तन्मामकं भारतम् ।। ध्रुव० ।।

## द्वितीयो भागः

जाह्नवी-चन्द्रभागा-जलैः पावितं भानुजा-नर्मदा-वीचिभिर्लालितम् ।
तुंगभद्रा-विपाशादिभिर्भावितं भूतले भाति मेऽनारतं भारतम् ।। ध्रुव० ।।
विन्ध्य-सह्याद्रि-नीलाद्रिमालान्वितं शुभ्रहैमाद्रि-हासप्रभापूरितम् ।
अर्वुदारावलीश्रेणि-सम्पूजितम् भूतले भाति मेऽनारतं भारतम् ।
यत्र मंदाकिनी पापसंहारिणी यत्र गोदावरी चारुसंचारिणी

1. श्रीरमाकान्तशुक्लस्य आकाशवाणी- दूरदर्शनाभ्यां बहुशः प्रसारिताः काव्य रचना अत्र संकल्यन्ते । संकलनकर्त्र्यौ--कु० माधवी शुक्ला, कु० सुस्मिता शुक्ला

देववाणी व यत्रास्ति मोदाकुला भूतले भाति तन्मामकं भारतम् ।। ध्रुव० ।।।

यत्प्रकृत्याः सुलीलास्थलं राजते पक्षिणां यद्विहारस्थलं विद्यते ।

यच्च षण्णामृतूणां विलासैर्युतं भूतले भाति तन्मामकं भारतम् ।। ध्रुव० ।।

## तृतीयो भागः

गोस्तनी-सेवपूर्णं मधुप्लावितं देवसारूद्वहं नौगृहैः रञ्जितम् ।

सुन्दरं यस्य काश्मीरकं राजते भूतले भाति तन्मामकं भारतम् ।।

क्षारमम्भोधिमापीय यस्मिन् स्थितैर्नारिकेलैः सुधोद्‌गारिभिः श्यामलः ।

शंकराचार्यदः केरलो राजते भूतले भाति तन्मामकं भारतम् ।। ध्रुव० ।

गण्डकी-शोण-गंगा-युता पाटली लिच्छिवी-सेविता चापि वैशालिका ।

भूषयामासतुर्यस्य पूर्वाञ्चलं भूतले भाति तन्मामकं भारतम् ।। ध्रुव० ।।

श्रीदयानन्द-गान्ध्युज्ज्वलं गुर्जरं स्वर्णबंगं विवेकारविन्दोज्ज्वलम् ।

नानकाद्युज्ज्वलं पञ्चतोयं दधद् भूतले भाति मेऽनारतं भारतम् ।। ध्रुव० ।।

## चतुर्थो भागः

रामकृष्णावतारस्थले विश्रुते नेहरू-मालवीयादि-रत्नोज्ज्वले ।

उत्तरे यस्य देशेऽस्ति तीर्थाधिपो भूतले भाति तन्मामकं भारतम् ।।

गोखले-बालगंगाधराराधितं श्रीशिवाजी-तुकाराम-सम्बोधितम् ।

यन्महाराष्ट्रकं सह्यशृंगोच्छ्रितं भूतले भाति तन्मामकं भारतम् ।।

आलवारस्वरैर्मोहितं तामिलं मध्यदेशं तथा चम्बलाद्युज्ज्वलम् ।

यच्च सोल्लासमासाममंके दधद् भूतले भाति तन्मामकं भारतम् ।। ध्रुव० ।।

गोम्मटेशानुभावप्रभापूरितम् यस्य कर्णाटकं चन्दनामोदितम् ।

यस्य राजस्थलं वीरगाथांकितं भूतले भाति तन्मामकं भारतम् ।।

आन्ध्रनागारुणादिप्रदेशेषु यत् स्वीयभूतिं तनोति प्रभूतां सदा ।

यस्य सर्वस्थलेष्वस्ति प्रत्यग्रता भूतले भाति तन्मामकं भारतम् ।। ध्रुव० ।

## पञ्चमो भागः

भाखडाबन्ध-दामोदरीयोजना - बाणगंगा-फरक्कादिसिक्तोर्जितम् ।
ब्रह्मपुत्रादिसन्दर्शिताम्बुच्छटं भूतले भाति मेऽनारतं भारतम् । ध्रुव० ।
विद्युदुत्पादने तैलसंशोधने, इन्धनान्वेषणे लौहनिष्पादने ।
यन्त्रनिर्माणकार्ये समर्थं च सद् भूतले भाति मेऽनारतं भारतम् ।।
यद्बरौनी-भिलाई-बुकारो-स्वनैः स्वोन्नतिस्यन्दनोत्थं शुभं घर्घरम् ।
दिक्षु विस्तारयद् वीक्ष्यते सर्वदा भूतले भाति तन्मामकं भारतम् ।। ध्रुव० ।।
आर्यभट्टं वियन्मण्डले स्थापयत् पोखरण्-भूमिगर्भेऽणुशक्तिं किरत् ।
शान्तिकार्येष्वणुं प्रेरयत्सन्ततं भूतले भाति मेऽनारतं भारतम् ।।
यद्दरिद्रव्यथां हर्तुमाकांक्षति यच्च वैज्ञानिकीमुन्नतिं वाञ्छति ।
यन्निजाध्यात्मरत्नप्रभालोकितं भूतले भाति तन्मामकं भारतम् ।। ध्रुव० ।।

## षष्ठो भागः

एशियाडं सुभव्यं समायोजयद् अन्तरिक्षे नरान् निर्भयान् प्रेषयत् ।
निर्गुटं राष्ट्रसम्मेलनं योजयत् भूतले भाति मेऽनारतं भारतम् ।।
रोगजालं चिकित्सालयस्थापनैरोषधोत्पादनैः शल्यशोधैस्तथा ।
नूतनाभिश्चिकित्साभिरुन्मूलयद् भूतले भाति मेऽनारतं भारतम् ।। ध्रुव० ।।
अग्निमूर्जस्वलं स्वत्वरक्षाकृते साधनैरात्मनीनैः सुसंसाधयत् ।
युद्धपोतांश्च सिन्धूरसि स्थापयद् भूतले भाति मेऽनारतं भारतम् ।। ध्रुव० ।।
रेल-नौका-विमानैस्तथा गन्त्रिभिर्यानकैस्तैश्च तैश्च प्रवेगान्वितैः ।
य "च्चैरेवे" ति नित्यं समुद्घोषयद् भूतले भाति तन्मामकं भारतम् ।। ध्रुव० ।।

## सप्तमो भागः

मेघमालाकुलं विद्युदुद्योतकं काशहासान्वितं सर्षपश्रीयुतम् ।
पक्वगोधूमसस्यैश्च सम्पूरितं भूतले भाति मेऽनारतं भारतम् ।। ध्रुव० ।।

कोकिलैः कूजितं षट्पदैर्गुञ्जितं केकिभिर्नृत्यपारंगतैर्नादितम् ।
सारिका-कीर-वादप्रवादैर्युतं भूतले भाति मेऽनारतं भारतम् ।। ध्रुव० ।।
हंस-कारण्डवैस्सारसैर्वर्तकैः क्रौञ्चकाकैः पिकैः खञ्जरीटैः शुकैः ।
तित्तिरैष्टिट्टिभैः श्येनगृध्रैश्चितं भूतले भाति मेऽनारतं भारतम् ।। ध्रुव० ।।
श्यामलानोकहश्रीसमृद्धान्तरं पद्मनेत्रैस्सरोभिस्समालोकितम् ।
निर्झरैः श्वेतफेनैस्समृद्धाञ्चलं भूतले भाति मेऽनारतं भारतम् ।। ध्रुव० ।।

## अष्टमो भागः

द्वारकां सेतुबन्धं पुरीं बदरिकां तिरुपतिं मधुपुरीं चाजमेरं दधत् ।
पुष्करामृतसरस्तीर्थराजैर्युतं भूतले भाति मेऽनारतं भारतम् ।।
हस्तिगुंफामजन्तामलौरां दधत् खर्जुराहो-गया-सारनाथैर्लसत् ।
ताज-कोणार्क-विष्णुध्वजैर्मण्डितं भूतले भाति मेऽनारतं भारतम् ।
होलिका-दशहरा-पर्वकोजागरी-पोंगल-श्रावणी-दीपमालामयम् ।
लोहडीदोणमाद्युत्सवैः पूरितं भूतले भाति मेऽनारतं भारतम् ।। ध्रुव० ।।
ओडिसीं मणिपुरीं कथक-गर्बादिकं कूचिपूडिं च गिद्दां छऊं भंगडाम् ।
कथकलीं डाण्डियां भरतनाट्यं दधद् भूतले भाति मेऽनारतं भारतम् ।।
मन्दिरैर्मस्जिदैश्चैत्य-गिर्जागृहै-रार्यगेहैर्गुरुद्वारकैर्भ्राजितम् ।
कर्मभूः शर्मभूर्धर्मभूर्मर्मभूः भूतले भाति मेऽनारतं भारतम् ।। ध्रुव० ।।

## नवमो भागः

वेदभाभासितं सत्कलालासितं रम्यसंगीत-साहित्य-सौहित्य-भूः ।
भारती-वल्लकी-झंकृतैर्झंकृतं भूतले भाति मेऽनारतं भारतम् ।। ध्रुव० ।।
संस्कृतं प्राकृतं तामिलं तेलुगुं कन्नडं कैरलीं बांगलामांगलाम् ।
वाचमन्यां च तां तां ब्रुवद् वर्धते राष्ट्रभाषायुतं मामकं भारतम् ।।
यत्र पुण्याः सरित्संगमा राजिता यत्र पाषाणतश्चामृतं स्यन्दते ।

भावना यत्र बोधेन संगच्छते भूतले भाति तन्मामकं भारतम् ।। ध्रुव० ।।
आर्षवृन्देषु शान्तिप्रधानेषु वै यत्र गूढं हि तेजः प्रदाहात्मकम् ।
साध्यते यत्र योगो मुदा साधकैर्भूतले भाति तन्मामकं भारतम् ।।
यस्य वात्सल्यभावेन पूर्णं शुभं दिव्यमुत्संगमाश्रित्य वैदेशिकैः ।
शान्तिराध्यात्मिकी निर्भयैः पीयते भूतले भाति तन्मामकं भारतम् ।। ध्रुव० ।।

## दशमो भागः

भूधराकाशतोयेषु रक्षापरो यत्र शत्रून् भटो हेलया नाशयेत् ।
यत्र वीरांगना युद्धभूमिं गता भूतले भाति तन्ममाकं भारतम् ।।
यत्प्रजातन्त्ररक्षापरैर्मानवैर्नास्ति हीनं कदापि प्रभाभासुरम् ।
आत्मतेजोमयं तद्द्वयहिंसामयं भूतले भाति मेऽनारतं भारतम् ।। ध्रुव० ।।
साधकैस्सद्भिरध्यात्मचिन्तापरैर्देशभक्तैर्विपश्चिद्भिरापूरितम् ।
कर्षकैः कार्मिकैः स्विन्नगात्रैर्युतं भूतले भाति मेऽनारतं भारतम् ।। ध्रुव० ।।
प्रेरणादायकं सत्कथागायकं ज्ञानविज्ञानतेजोबलाधायकम् ।
दुःखदारिद्र्य-दग्धान् सदा पालयन्मोदते मे सदा पावनं भारतम् ।। ध्रुव० ।।
यत्र नास्त्यंकुशो वाचि कस्यापि वै यत्र नास्त्यंकुशो मानसे कस्यचित् ।
यत्र नास्त्यंकुशः कर्मणि क्वापि वै भूतले भाति तन्मामकं भारतम् ।। ध्रुव० ।।
जीवदास्ते न जानामि कस्माद्युगात् साम्प्रतं निर्धनत्वेऽपि सञ्जीवति ।
मृत्युहीनं जराहीनमाशान्वितं भूतले भाति मेऽनारतं भारतम् ।। ध्रुव० ।।

## एकादशो भागः

मानवामानितं दानवाबाधितं निर्जराराधितं सज्जनासाधितम् ।
पण्डितैः पूजितं पक्षिभिः कूजितं भूतले भाति मेऽनारतं भारतम् ।।
यस्य संदृश्य संदृश्य शोभा नवा यस्य संस्मृत्य संस्मृत्य गाथा नवाः ।
रोमहर्षो नृणां जायते वै सतां भूतले भाति तन्मामकं भारतम् ।।
यच्च विश्रामभूमिर्मतं प्राणिनां यस्य चित्ते प्रभूतोऽवकाशस्तथा ।

यत्र चागत्य गन्तुं न कोऽपीच्छुको भूतले भाति तन्मामकं भारतम् ।।
पण्डितैर्योद्धृभिर्वाणिजैः कार्मिकैः शस्त्रिभिः शास्त्रिभिर्वर्णिभिर्गेहिभिः ।
वानप्रस्थैश्च संन्यासिभिर्मण्डितं भूतले भाति मेऽनारतं भारतम् ।।
यस्य चेतोहरा भान्ति लोके कला यस्य शिल्पान्यपूर्वाणि चैवासते ।
यत्पुराणैर्नवैर्वैभवैः पूरितं भूतले भाति तन्मामकं भारतम् ।।

## द्वादशो भागः

यत्त्रयीसांख्ययोगादिमार्गैर्युतं जीवनं मुक्तमाकर्तुमाकांक्षति ।
शीलसन्तोषसत्यादिभी रक्षितं भूतले भाति तन्मामकं भारतम् ।।
दर्शनज्ञानचारित्र्यसम्मेलनं यत्र मोक्षस्य मार्गं भणन्त्यागमाः ।
ज्ञानमास्ते च भारः क्रियां वै विना भूतले भाति तन्मामकं भारतम् ।।
व्यासवाल्मीकिरत्नाकरै रुज्ज्वलं स्वादुकाम्बरीपानलुब्धं सदा ।
कालिदासेन भासेन संद्योतितं भूतले भाति मेऽनारतं भारतम् ।।
योगवासिष्ठगीतामहाभारतैर्ग्रन्थरत्नैश्च तैस्तैः प्रबुद्धं तथा ।
मानसं बीजकं सूरसिन्धुं दधद् भूतले भाति मेऽनारतं भारतम् ।।
यत्र माता पिताचार्य आराध्यते देवतेव प्रधीभिर्जनैस्सादरम् ।
यत्र दुःखी दरिद्रोऽस्ति नारायणो भूतले भाति तन्मामकं भारतम् ।।
यस्य विश्वे समस्तेऽपि विद्योतते पावनं नाम दिव्यं यशश्चोज्ज्वलम् ।
प्राणिसंघं च प्रीणाति यद्दर्शनं भूतले भाति तन्मामकं भारतम् ।।

## त्रयोदशो भागः

यत्स्वतन्त्रं विधातुं हुतं जीवनं देशभक्तैरसंख्यैर्विलम्बं विना ।
यस्य सौख्यं समृद्धिश्च साध्ये सदा भूतले भाति तन्मामकं भारतम् ।।
यत्र झंझेव झांसीश्वरी कुर्वती क्रूरदुर्नीतिदुष्टैः सहायोधनम् ।
कर्तुमैच्छत्स्वदेशं स्वतन्त्रं द्रुतं भूतले भाति तन्मामकं भारतम् ।।

'जन्मसिद्धाधिकारः स्वराज्यं हि मे तं गृहीत्वैव तुष्टिं गमिष्याम्यहम् ।'
बालगंगाधरो यत्र घोषं ददौ भूतले भाति तन्मामकं भारतम् ।।
'दीयतां मे स्वरक्तं भवद्भिस्समैरात्मतन्त्र्यं भवद्भ्यो मया दास्यते ।
घोषमित्थं सुभाषस्य संश्रावयत् भूतले भाति मेऽनारतं भारतम् ।।
स्वीयदार्ढ्येन कार्यैस्तथा नीतिभिर्लौहवीरः पटेलः सदा धीरधीः ।
एकतां रक्षितुं यस्य संस्मर्यते भूतले भाति तन्मामकं भारतम् ।।
'सैनिकाः कर्षकाश्चाप्नुयुर्वै जयम्' इत्थमुद्घोषयन् शास्त्रिवर्यः प्रधीः ।
यत्र चक्रे समुत्साहदीप्तान् जनान् भूतले भाति तन्मामकं भारतम् ।।
नायकाश्चापरे नूतनैर्नूतनैर्यैश्च घोषैर्जनान्दोलनं चक्रिरे ।
स्मारयत्तान् यथाकालमाशाप्रदान् भूतले भाति मेऽनारतं भारतम् ।।

## चतुर्दशो भागः

मातृभूमेर्विपज्जालमुच्छेदयन् मृत्युपाशं च कण्ठे सहर्षं धरन् ।
भक्तसिंहोऽस्ति यत्रामरत्वं गतो भूतले भाति तन्मामकं भारतम् ।।
'स्मो नु विक्रेतुकामा वयं स्वं शिरः, दर्शनीयं बलं किं नु हन्तुः करे ।'
इत्थमाभाषते बिस्मिलो यत्र तद् भूतले भाति मेऽनारतं भारतम् ।।
शेखरश्चन्द्रपूर्वोऽश.फाकस्तथाऽन्येप्यनेके हुतात्मान उत्साहिनः ।
जीवनं स्वं यदर्थं बलिं चक्रिरे भूतले भाति तन्मामकं भारतम् ।।
घर्घरस्वानपूर्वं पुरः प्रस्थितान् शत्रुटैंकान् करीन्द्रानिव ध्वंसयन् ।
श्रीहमीदो बभौ केसरी यत्र तद् भूतले भाति मेऽनारतं भारतम् ।।
'डोगराई' स्थले राम आशायुतः शत्रुटैंकान् विभिन्दन् करीन्द्रानिव ।
मातृपूजापरो यत्र नाकं गतो भूतले भाति तन्मामकं भारतम् ।।
देशभक्तान् प्रति स्वादरं व्यञ्जयद् भीषणं युद्धदावानलं वारयत् ।
कालकूटं पिबच्चापि मोदं वहद् भूतले भाति मेऽनारतं भारतम् ।।

## पञ्चदशो भागः

देहली राजधानी यदीया प्रिया नूतना नूतना प्रत्यहं स्पन्दते ।
स्वांकमाप्तान् जनान् पालयन्ती सदा भूतले भाति तन्मामकं भारतम् ।।
जन्वरीमासषड्विंशके वासरे इण्डियागेट-पार्श्वस्थितो दर्शकः ।
यस्य शोभाप्रवाहे मुदा मज्जति भूतले भाति तन्मामकं भारतम् ।।
यस्य दिल्लीस्थिते रक्तदुर्गे शुभे संसदश्चोत्तमाङ्गे त्रिरंगध्वजः ।
सार्वभौमीं स्व सत्तां वदत्युल्लसन् भूतले भाति तन्मामकं भारतम् ।।
वाजिराजिं गजालिं च न्यक्कुर्वता पण्डितेन्द्रेण यस्मिल्लवङ्गी वृता ।
सुस्तनी मस्तकन्यस्तकुम्भा प्रिया भूतले भाति तन्मामकं भारतम् ।।
यस्य दिल्लीस्थिते पण्डितैर्मण्डिते भव्यवाणीविहारे मुदा तन्यते ।
श्रीरमाकान्तशुक्लेन काव्यप्रभा भूतले भाति तन्मामकं भारतम् ।।
यस्य वैदेशिकैर्यात्रिभिः कीर्तिता चारुकीर्तिः ककुब्व्यापिनी प्रोज्ज्वला ।
यस्य धर्मो विदेशैस्समालिङ्गितो भूतले भाति तन्मामकं भारतम् ।।

## षोडशो भागः

यच्च तीर्थैः पवित्रैर्व्रतैरुत्सवैः पर्वभिर्दर्शनीयैः स्थलैः शोभितम् ।
यच्च नानाजयन्तीगणै राजितं भूतले भाति तन्मामकं भारतम् ।।
प्राच्यपाश्चात्त्यशिक्षाप्रणालीयुतैर्बालबालायुवप्रौढविद्यालयैः ।
विश्वविद्यालयैः शोधगेहैर्युतं भूतले भाति मेऽनारतं भारतम् ।।
यद्रसालं रसालैस्तथान्यैः फलैः षड्रसैर्भोजनैर्लोकतृप्तिप्रदम् ।
यत्र पूज्या लताः पादपा देववद् भूतले भाति तन्मामकं भारतम् ।।
यत्र दृश्या वनानी मनोमोहिनी यत्र दृश्या हिमानी मनोमोहिनी ।
वाटिकोद्यानसत्क्षेत्रशोभावहं भूतले भाति मेऽनारतं भारतम् ।।
सागरीयैस्तटैर्गोचरैः प्राञ्जलैः पक्षिणां वा पशूनां विहारस्थलैः ।

सौम्यरौद्रस्वरूपैः प्रकृत्याः युतं भूतले भाति मेऽनारतं भारतम् ।।
आहिमाद्रेस्तथैवा च कन्याकुमार्यन्तरीपाद्यदास्ते जनानां तपः ।
तेन विश्वस्य सौख्यं सदा साधयद् भूतले भाति मेऽनारतं भारतम् ।।

## सप्तदशो भागः

अर्थकामान्वितं धर्ममोक्षान्वितं भक्तिभावान्वितं ज्ञानकर्मान्वितम् ।
नैकमार्गैः प्रभुं चैकमाराधयद् भूतले भाति मेऽनारतं भारतम् ।।
शंप्रदं शंकरं माधवं राघवं पार्वतीं राधिकां जानकीं च स्तुवत् ।
विट्ठलं बुद्धदेवं जिनं च स्मरद् भूतले भाति मेऽनारतं भारतम् ।।
विश्वनाथं महाकालमाराधयद् एकलिङ्गं भजद् वेंकटेशं स्मरत् ।
कालिकां पूजयद् वैष्णवीं च स्तुवद् भूतले भाति मेऽनारतं भारतम् ।।
कुंकुमैश्चन्दनैः पुष्करैः पाटलैः सर्वगं सच्चिदानन्दमाराधयत् ।
सर्वभूतेषु दृष्टिं समां धारयद् भूतले भाति मेऽनारतं भारतम् ।।
कृष्णलीलायुतं वेणुसन्नादितम् पावनं भावनं यत्र वृन्दावनम् ।
शम्भुशूलस्थिता यत्र वाराणसी भूतले भाति तन्मामकं भारतम् ।।
यन्मुनीनां तपस्यास्थली कथ्यते यत्परब्रह्मलीलास्थली विद्यते ।
यच्च नानाकथानां निधी राजते भूतले भाति तन्मामकं भारतम् ।।
मामकीना गिरः शक्तिमत्योऽपि नो वर्णनं पूर्णतां यस्य कर्तुं क्षमाः ।
वर्णनातीतमेवानुभूयेत यद् भूतले भाति तन्मामकं भारतम् ।।

## अष्टादशो भागः

लोकगीतेषु चित्तं यदीयं रतं लोकनृत्येषु चित्तं यदीयं रतम् ।
लोककृत्येषु चित्तं यदीयं रतं भूतले भाति तन्मामकं भारतम् ।।
कुम्भसिंहस्थवैशाखिमुक्तेश्वर-सोनपूरादिमेलापकैः रञ्जितम् ।
रासलीलायुतं रामलीलायुतं भूतले भाति मेऽनारतं भारतम् ।।

यत्कुरुक्षेत्रमध्ये स्वयं श्रीहरिर्निष्क्रियं पार्थमाश्वासयद् गीतया ।
स्वीयरूपेण तं च व्यधात्कर्मठं भूतले भाति तन्मामकं भारतम् ।।
शुक्रतालास्पदे यत्र वैयासकिः पापहन्त्रीं कथामाह साप्ताहिकीम् ।
यत्र चाद्याप्यवृद्धो वटो राजते भूतले भाति तन्मामकं भारतम् ।।
यत्कवीनां गणैरस्ति संशोभितं यच्च वैज्ञानिकानां गणैः राजितम् ।
यस्य संगीतकारा जगद्विश्रुता भूतले भाति तन्मामकं भारतम् ।।
यस्य शिष्यास्तथाध्यापका विश्रुताः यस्य विद्याप्रशाखाश्च विश्वश्रुताः ।
संस्कृतं संस्कृतिर्यस्य विश्वश्रुते भूतले भाति तन्मामकं भारतम् ।।
तिष्ठतोत्तिष्ठता गच्छता क्रीडता कुर्वतानेककर्माणि मे जीवने ।
गीयतां गीयतां सप्रमोदं मया भूतले भाति मेऽनारतं भारतम् ।।

## एकोनविंशो भागः

कर्दमाक्रान्तवीथिषु सौधेषु वा यस्य पादातमार्गेषु गेहेषु वा ।
जीवनं लोकसेवापरं लक्ष्यते भूतले भाति तन्मामकं भारतम् ।।
वह्निभूकम्पझंझाजलप्लावनैर्भीषितं चापि यत्साहसं न त्यजेत् ।
ईतिभीतिप्रभावांस्तथा तर्जयेत् भूतले भाति तन्मामकं भारतम् ।।
वञ्चकैस्तस्करैर्भञ्जकैः स्वार्थिभिर्वञ्चितं लुञ्चितं खण्डितं दण्डितम् ।
किन्तु नैजैरमेयैर्बलैर्वर्द्धितं भूतले भाति मेऽनारतं भारतम् ।।
शासनासन्दिकाराधनैकव्रतं नेतृवृन्दं समालोक्य छद्मावृतम् ।
यत्र नित्यं हसन्ति प्रजानां गणाः भूतले भाति तन्मामकं भारतम् ।।
व्यावृतास्याः समस्याः समाधाय यत् स्वावलम्बं समालब्धुमाकांक्षति ।
मार्गमुच्चावचं लङ्घयित्वा चलद् भूतले भाति तन्मामकं भारतम् ।।
यत्र हत्याबलात्कारसम्पीडिता दस्युतोत्कोचमाहार्घ्यसंशोषिताः ।
नो हताशा जना आयतिप्रेक्षका भूतले भाति तन्मामकं भारतम् ।।

यत्र नग्नाः क्षुधार्ता अगेहा अपि स्वाभिमानं जहत्येव नो मानवाः ।
यत्र दृप्तं निरीहस्तृणं मन्यते भूतले भाति तन्मामकं भारतम् ।।
आर्तरक्षार्थमस्त्राणि शस्त्राण्यथो यत्र मान्यानि हन्तुं न चानागसः ।
जागरूका यदीयाः सदा सैनिका भूतले भाति तन्मामकं भारतम् ।।

## विंशो भागः

रक्तपातं विना शस्त्रपातं विना यत्र संक्रान्तिरायाति मन्दस्मिता ।
येन विश्वं सदा शिक्ष्यते प्रेर्यते भूतले भाति तन्मामकं भारतम् ।।
शासकानां मदं हेलयैव प्रजा यत्र हन्ति प्रजातन्त्ररक्षापरा।
त्यागिनो यत्र नैव म्रियन्ते क्वचिद् भूतले भाति तन्मामकं भारतम्।।
निर्बलं निर्धनं कैश्चिदुक्तं सदप्यस्ति यत्स्वाभिमानेन पूर्णं सदा।
शारदाश्रीसपर्यापरं पावनं भूतले भाति मेऽनारतं भारतम् ।।
यस्य तिष्ठन्ति गेया अनेके गुणा यस्य तिष्ठन्ति गेया अनेकाः क्रियाः ।
अस्ति यस्मिन्ननेकत्व एकस्थितिर्भूतले भाति तन्मामकं भारतम् ।।
सन्तु दोषा अनेकेऽत्र कैश्चिन्मताः किन्तु नाहं प्रपश्यामि तान् मन्दधीः ।
वन्दनीयं मया कीर्तनीयं मया मोदतां वर्धतां राजतां भारतम् ।।
शोषितो नात्र कश्चिद्भवेत्केनचिद् व्याधिना पीडितो नो भवेत्कश्चन ।
नात्र कोऽपि व्रजेद्दीनतां हीनतां मोदतां से सदा पावनं भारतम् ।।
एत बालाः किशोर्यो युवत्यस्समा एत बालाः किशोरा युवानस्तथा ।
प्रौढवृद्धाः ! समैः गीयतां गीयतां भूतले भाति मेऽनारतं भारतम् ।।

# भारतजनताहम्

(रमाकान्त शुक्लः)

अभिमानधना विनयोपेता शालीना भारतजनताहम् ।
कुलिशादपि कठिना कुसुमादपि सुकुमारा भारतजनताहम् ।।

विज्ञानधनाहं ज्ञानधना साहित्य-कला-संगीतपरा ।
अध्यात्मसुधातटिनी-स्नानैः परिपूता भारतजनताहम् ।।

किं किं न तपस्तप्तं हि मया स्वातन्त्र्यदेवताराधनाय? ।
किं किं न महे तद्रक्षार्थं श्रमशीला भारतजनताहम् ।।

नग्ना बुभुक्षिता निर्गृहा सत्यपि जीवामि बहोः कालात् ।
जीविष्यामि च कल्पान्तमहं, मृत्युंजय-भारतजनताहम् ।।

जिह्वां मे कीलयितुं शक्तः कः कोऽत्र जगति मातुर्जातः ।
वाणी विहरति मे सदोज्ज्वला गर्जन्ती भारतजनताहम् ।।

अभितः परितः समया निकषा मां यद्घटते तत्प्रेक्षेऽहम् ।
सर्वस्य कृते खलु सज्जा यासावहिता भारतजनताहम् ।।

# अहं स्वतन्त्रता भणामि

(डा० रमाकान्त शुक्ल:)

अहं स्वतन्त्रता भणामि मद्वचो निशम्यताम् ।
निधाय मानसे च तद् यथोचितं विधीयताम् ॥
अहं स्वतन्त्रता भणामि ।

(१)

मदर्चनाकृते शिरांस्युपायनीकृतानि यैः,
धनं वपुस्तथा मनः सहर्षमर्पितानि यैः ।
अवापुरात्मवक्षसि ज्वलद् भुशुण्डिगोलिकाः,
गता त एव मे जनाः सदैव वन्दनीयताम् ॥
अहं स्वतन्त्रता भणामि ॥

(२)

भवद्भिरन्तरिक्षगा जनाः स्वदेश ईक्षिताः,
भवद्भिराततायिनाशकारिणोऽपि दीक्षिताः ।
कृतं भवद्भिरेशियाद्व्यशीतिखेलयोजनम्
तदेतदर्थमद्य मे शुभेहितं प्रगृह्यताम् ॥
अहं स्वतन्त्रता भणामि ॥

(३)

शुभा हि कामनाः भवत्कृते समर्पयाम्यहम्:,
समुन्नतिं सुखं च वः सदैव चिन्तयाम्यहम् ।
परन्तु वर्तमानया विचित्रकाललीलया
मनाग् विचिन्तिता यदेव वच्मि तन्निशम्यताम् ॥
अहं स्वतन्त्रता भणामि ॥

(४)

मया न कल्पितं कदापि दुर्बलाभिशोषणम्, ।
मया न कल्पितं कदापि दुर्जनाभिपोषणम् ।
मया न कल्पितं कदापि सज्जनावमाननम्,
सहेऽखिलं च तद्, तथा सहै न, तद्विधीयताम् ।।
अहं स्वतन्त्रता भणामि ।।

(५)

विलोकयामि वृत्तिहीनतामहं यदा यदा ,
विलोकयामि नीतिहीनतामहं यदा यदा,
नतानना गतासुका भवाम्यहं तदा तदा ।
इयं दशा न मेऽस्तु येन, तत्सदा विधीयताम् ।।
अहं स्वतन्त्रता भाणामि ।।

(६)

यदा यदा शृणोम्यहं वधूविदाहपातकम्,
यदा यदा शृणोम्यहं बलात्कृतिं विहिंसनम्,
तदा तदा भवाम्यरुन्तुदव्यथाप्रपीडिता ।
इयं व्यथा प्रणाशमेतु येन, तद्विधीयताम् ।।
अहं स्वतन्त्रता भणामि ।।

(७)

क्वचिद्विलाससाधनैर्विमण्डिता विलासिनः,
क्वचित्क्षुधाप्रपीडिता वसन्ति देशवासिनः ।
क्वचित्पयस्विनी धनस्य कुत्रचिच्च निःस्वता,
इयं दशा विलोपमेतु येन तद्विधीयताम् ।।
अहं स्वतन्त्रता भणामि ।

(८)

स्वदेशवासिभिः स्वदेशवासिनां विहिंसनम्ः,
पृथक्त्वभावपोषणं स्वदेशदेहदारणम् ।
अधीतिपण्यविक्रयं करप्रदातृनिःस्वतां,
विलोक्य यां शुचं गतास्मि, सा द्रुतं विलोप्यताम् ।।

अहं स्वतन्त्रता भणामि ।।

(९)

दलाद् दले पलायनं, प्रवञ्चनां क्षणे क्षणे,
प्रतारणं जने जने, विहिंसनं पणे पणे ।
विलोक्य रोगदायकं विमिश्रणं कणे कणे,
गतास्मि यां शुचं हि, सा द्रुतं द्रुतं विलोप्यताम् ।।

अहं स्वतन्त्रता भणामि ।।

(१०)

अयोग्यता पदोन्नता, सुयोग्यता पदच्युता,
अमोघलाभकारिणी मता च चाटुकारिता ।
इयं दशा स्वभारतस्य चेत्तदा मम स्थितिः
सुपुष्टतां भजेत्कथं ? भवद्भिरेव कथ्यताम् ।।

अहं स्वतन्त्रता भणामि ।।

(११)

अहं स्मरामि कष्टपद्धतिं पुरानृणां यदा,
अहं भवामि गद्गदाभिमानसंयुता तदा ।
विलोक्य किन्तु वर्तमाननेतृलाभकांक्षितां
व्रजान्यहं मुदं ह्यथो शुचं ? स्वयं विचार्यताम् ।।

अहं स्वतन्त्रता भणामि ।।

(१२)

जलं न लभ्यते तथा, यथा सुरा पदे-पदे,
वचांसि सन्ति भूरिशो, न हि क्रियाः पदे पदे ।
पुनश्च भेदभावना प्रवर्त्यते पदे-पदे
इयं दशा समर्थनं किमर्हतीति चिन्त्यताम् ।।
अहं स्वतन्त्रता भणामि ।।

(१३)

धनस्य वा श्रमस्य वा न कृच्छ्रतास्ति भारते,
समस्तधातवो मिलन्ति भारते प्रभारते ।
उदेति या यदा-कदा तथापि बुद्धिहीनता,
न सा कदाप्युदेतु येन, तत्सदा विधीयताम् ।।
अहं स्वतन्त्रता भणामि ।

(१४)

न निर्धनो न निर्बलो जनोऽत्र कोऽपि जायताम्,
न कस्यचित्समादरो विखण्डितश्च जायताम् ।
निजावलम्बनं जने जने सदा प्रवर्धताम् ,
जनो जनोऽस्य भारतस्य मोदतां प्रमोदताम् ।।
अहं स्वतन्त्रता भणामि ।

# देववाणी-सुवासः

(डॉ० रमाकान्तशुक्लाभिनन्दनग्रन्थः)

## चतुर्थः प्रसरः

### संस्कृतसाहित्यस्य विविधपक्षानवलम्ब्य शोधसमीक्षात्मका लेखाः

# देववाणी-सुवासः (चतुर्थः प्रसरः)

## अनुक्रमणिका

# देवभाषा संस्कृतम्

डॉ0 सावित्री देवी शर्मा

अस्माकं भारतीयसंस्कृतेरविरतगतिरार्यावर्तीयशरीरशिरासु कृतवसतिः, सुभद्रजीवनपथनिर्देशिका, वेदवेदाङ्गमर्मज्ञदेवजनसमुपास्या शाश्वती सुरभारती सर्वदान्तःसलिता निर्झरिणीव वसुन्धरामिमामौदार्य-जलधाराभिरहर्निशं परिसिञ्चन्ती, मङ्गलमयीं सात्त्विकीं पुण्यविज्ञानप्रभां सततं प्रसारयन्ती विश्वस्मिन्नधुना सकलसाहित्यरसिकैः प्रशस्यते । सृष्टेरादिकालादारभ्याद्यावधि प्रचलितासु समस्तलोकभाषासु प्राचीनतमा समृद्धविविधसाहित्याभिभूतान्यभाषावैभवा काव्यनाटकदर्शनेतिहास-दार्शनिकचिरन्तनासाधारणप्रतिभा-समन्विता मानवीयमानसभावा-भिव्यञ्जनसक्षमा संस्कृता वागेव वस्तुतः गीर्वाणवाणी यस्याः प्रभावात् देवत्वमासाद्य मनुष्या दिव्यशक्तिसम्पन्ना भवन्तिं । शुभाचारबलप्रदात्री समेषां श्रुतिवाङ्मयानां विचारमालाभिः प्रसादयित्री ऋषिप्रबोधयुता शास्त्रार्थमनोज्ञरूपा विद्वद्वरेण्यैः भाषावैज्ञानिकैरभिनन्दनीया साऽमरवाणी सर्वभूतहितावहा विजयतेतराम् ।

वस्तुतो भारतस्य हितमेव नहि अपितु भूमण्डलस्य सार्वजनीनं मङ्गलमस्मिन् संस्कृते एव निहितम् । यतो हि सरससुबोधा विश्वमनोज्ञा प्रतिपदललिता सर्वहृद्या रमणीया संस्कृतभाषैव कविकुलकुमुदकला-धरवाल्मीकिकालिदासभारविमाघादिमधुरमञ्जुलसाहित्यभावकलापक्ष-मण्डिताऽतीव सरला ज्ञानविज्ञानपरिवर्धिनी गहनकर्मयोगपथदीपिकेव प्रतीयते । इयमेवान्धविश्वास - पूर्वाग्रहधर्मान्धित्व - हिंसातङ्कप्रवादानां सर्वविधशोषणपक्षपातानां च विनाशकरी शक्तिस्वरूपाऽस्ति । राष्ट्रैक्य-मखण्डतानिश्चायकं विश्वबन्धुत्वाभिवर्धनं संस्कृतमेव दृश्यते । समाजवाद-सम्प्रदायनिरपेक्षलोकतन्त्रात्मकगंणराज्यसमुद्घोषिका भारत-भारतीयं भाषा सार्वभौभसंरक्षणपरायणा विराजते विश्वस्मिन् । अनादिकालादेव स्वकीयं प्रोज्ज्वलमैतिह्यं प्रसारयन्ती सन्ततप्रयत्नशीला

संस्कृतपाण्डित्य- परम्परायाः, भारतीयदर्शन-साहित्य-संस्कृति-कला-शिल्प-लोकधर्म-विज्ञानसम्बन्धिशास्त्राणां प्रचारिका गीर्वाणवाणी वरीवर्ति।

समुद्यद्भुवनभास्करांशुमाणिक्यपुञ्जप्रभाभासुरा क्वणत्कच्छपी मञ्जुनादैर्वाचां गभीररहस्यानि मुहुरभिव्यञ्जयन्ती, जगद्वन्द्यविद्वत्प्रणीतानन्तसरस्वत्यलङ्कारहारान् कलामञ्जुलानशेषविद्याप्रसादलब्धाधिकारान् नूतनविज्ञानप्रयोगैः प्रशंसितप्रबन्धान् समुद्योतयन्ती, समुदारशास्त्रार्थसम्पूर्णताश्रियमुद्वहन्ती, भारतीयसंस्कृतितरुदल निकरं सुपुष्पितं सुपल्लवितं सफलञ्च कुर्वती विश्वभाषासु महनीया सुरभारतीयम्।

परं खेदावहोऽयं विषयस्तदेव संस्कृतमद्य भारतीयप्रशासनेनोपेक्षितमस्ति। यद्यपि भारतसर्वकारेण संस्कृतविद्यालया विद्यापीठाश्च स्थापिताः; तेभ्यो धनानुदानमपि प्रतिवर्षमपेक्षितं प्रदीयते ; संस्कृतज्ञविद्वांसः तेषां नवरचितग्रन्थाश्च ससम्मानं पुरस्क्रियन्ते ; प्रदेशे प्रदेशे संस्कृतसंस्थाभिः संस्कृतसंरक्षणाय बहुविधकार्याण्यपि विधीयन्ते; भारतीय- शिक्षापद्धतौ पाठ्यक्रमे हिन्दीभाषया सह संस्कृताध्ययनस्यानिवार्यसंयोजनमपि कृतम्; तथापि शिक्षाधिकारिभिः संस्कृतस्य हितचिन्तनं मनसा श्रद्धापूर्वकं नैव कृतमिति स्पष्टमेव ज्ञायते। निम्नाङ्कितकारणानि विचारणीयानि सन्ति :-

(१) शिक्षापाठ्यक्रमे हिन्दीभाषया सह संस्कृतविषयकसंयोजनं तस्यास्तु ह्रासकरणमस्त्येव संस्कृतस्यापि मनोवैज्ञानिकी विनाशकरी योजना प्रतीयते। यतो हि विद्यालयस्य छात्रास्तु हिन्द्या सह संस्कृताध्ययनं केवलं शतप्रतिशताङ्कप्राप्तिसाधनविषयमिति मत्वा पठन्ति। संस्कृत- गद्य-पद्यश्लोकानुवादमेव रटित्वा प्रथमश्रेण्यामुत्तीर्णा गौरवान्विता मन्यन्ते। संस्कृतमाध्यमेन पठनं लेखनं भाषणञ्चानिवार्यं नास्ति। अतः संस्कृतरक्षणाय नहि अपितु विनाशायैव हिन्दीसंस्कृतगठबन्धनं कृतमस्ति।

(२) द्वितीयं महदाश्चर्यं यत् सर्वासां भाषाणामन्तिमोपाधिपत्रं (मास्टर डिग्री) तत्तद्भाषामाध्यमेनैवोपलब्धुं शक्यते परं एम0 ए0 संस्कृतोपाधिस्तथा संस्कृते शोधग्रन्थलेखनं यस्यां कस्याञ्चित् (हिन्दी-

अंग्रेजी, उर्दू, अरबी, काचिदपि प्रान्तीया भाषा वा) भाषायां कर्तुं स्वातन्त्र्यं प्रदत्तमस्ति प्रशासनाधिकारिभिः। देवभाषामाध्यमेन शिक्षिताः प्रथमापरीक्षोत्तीर्णाश्छात्रा अपि एम0 ए0 (संस्कृत) संस्कृते पी-एच0 डी0 उपाधिधारिस्नातकेभ्यः सुयोग्यतरा विलोक्यन्ते । संस्कृतभाषामाध्यमं विना कश्चिदपि विद्यार्थी संस्कृते पठनं लेखनं भाषणञ्च कर्तुमक्षमः । गद्य-पद्य-नाटकादिग्रन्थलेखनस्य तु का कथा ।

संस्कृतभाषायाः संरक्षण - प्रचार - प्रसारहेतोरधोलिखिता उपायाः प्रस्तूयन्ते । भारतराष्ट्रस्य सकलसमृद्धिहेतोरस्माकं प्रभुतासम्पन्न- सव-ॅकारेण शीघ्रं ध्यानं देयम्ः-

(१)प्रारम्भिकविद्यालयादारभ्य विश्वविद्यालयीयशिक्षापर्यन्तं संस्कृतभाषाशिक्षणं संस्कृतसंभाषणमाध्यमेनैवानिवार्यं क्रियेत प्रशासन-द्वारा । यथा क्रिश्चियनविद्यालयेषु आङ्ग्लभाषामाध्यमेन समस्तविषयाणा-मध्यापनं सरलतया सम्भाव्यते । अस्यां गीर्वाणवाण्यामपि सर्वविधविषयाणां ग्रन्थाः समुपलभ्यन्ते । यदि क्वचिदपि न्यूनता स्यात् तदा विषयमर्मज्ञैः (इतिहास-भूगोल-गणित-नागरिकशास्त्र-दर्शन-मनोविज्ञान-शिक्षाविज्ञान-राजनीति-सैन्यविज्ञानादिविषयेषु) ग्रन्थरचनाः कार्याः ।

(२)वर्तमानशिक्षाप्रणाल्यां प्रशासनेन तत्तद्विषयमवलम्ब्य प्रणीतानामाधुनिकग्रन्थानान्तु पाठ्यक्रमे समावेशः कृतः परं प्राचीनविदुषां बहुविधसाहित्यस्य न क्वापि चर्चा विद्यते । अद्यतनो विद्यार्थी न जानाति यत् संस्कृतभाषायां भौतिकी-रसायनशास्त्र-गणित-ज्योतिषादिविषयाणा-मपि सारगर्भितग्रन्थाः सन्ति । वस्तुतः प्रत्येकविषयस्य सम्पूर्णज्ञानाय एतेषां ग्रन्थानामेवाध्ययनमावश्यकमस्ति अतस्तेषां (प्रत्येकविषय-सम्बद्धानाम्) संस्कृतग्रन्थानां पाठ्यक्रमे निर्धारणमनिवार्यं स्यात् । प्राचीनग्रन्थपरिचयः, प्राच्यशिक्षाज्ञानविज्ञानवर्द्धनं, स्वभारतीयसंस्कृति-गौरवानुभूतिः, ग्रन्थानुशीलनजनितपाण्डित्यम्, सुरवाणी-माहात्म्यज्ञानम्, भाषा-संस्कृति-साहित्य-विवेचनम्, अभ्युदयनिःश्रेयसोरुपलब्धिरित्येतत् सुफलं तस्य ।।

(३) राजकीयविभागेषु संस्कृतभाषायामेव कार्यसञ्चालनादेशः:

स्यात्। विशेषतो न्यायालयेषु निर्णयपत्राणि संस्कृतनिष्ठान्येव भवेयुः। नास्तीदं कठिनं कार्यम्। अधुनैव श्रीबनवारीलालयादवमहोदयेन देवभाषायां स्वनिर्णयं लिखता स्पष्टीकृतं यत् न्यायार्थं संस्कृतग्रन्थाध्ययनं कियदावश्यकमस्ति।

(४) अस्माकं राष्ट्रस्योत्तरदायित्वपूर्णपदमुद्वहन्तः संस्कृतज्ञाः एवाधिकारिणो नियुज्येरन् पदवाक्यप्रमाणज्ञैः विद्वद्वरेण्यैः।

(५) संस्कृतनिष्ठविदुषां सर्वप्रथमकर्तव्यमस्ति स्वपारिवारिक-स्वजनैः सह संस्कृतसंभाषणमनिवार्यरूपेण कुर्युः। स्वजनपरिजनेष्टजन-प्रतिवासिभिः सह यदा कदा संभाषणशिविरायोजनमपि कर्तव्यम्। संस्कृतस्वयंशिक्षक-संस्कृतवाक्यप्रबोधसदृशपुस्तकानां वितरणं यथाशक्ति विधेयम्। स्वसदनेषु सर्वप्रकारशब्दकोषसूची सर्वेषां स्मरणार्थ-मवलम्बनीया।

(६) संस्कृतानुरागिभिः देवभाषाविज्ञैः भारतस्य विविधपत्रपत्रिकासु स्वरचितगद्य-पद्य-काव्यनाटकादिप्रेषणेन संस्कृत-प्रचारकार्ये सहयोगः करणीयः। स्वग्रामे नगरे वा सारस्वतवैभवप्रसारणाय शारदीय-गोष्ठी नामायोजनमत्यावश्यकं मासिकं पाक्षिकं वा। दैनिकभाषाप्रयोगार्थं शरीराङ्गभोज्यपदार्थ-पारस्परिकव्यवहारयोग्यशब्दसूची मुद्रयित्वा प्रतिवासिजनेषु सप्रेम वितरणीया।

(७) संस्कृतमस्माकं राजभाषा-राष्ट्रभाषा-व्यवहारभाषा-अन्ताराष्ट्रियभाषापदे प्रतिष्ठापयितुं सततं प्रशासकीयाधिकारिभिः सह सुसंघटितभारतीयैः संघर्षरतैर्भाव्यम्। स्वतन्त्रतासंग्रामसेनानिनो वयं वैदिकसंस्कृतिसंरक्षणाय निरन्तरं देवभारतीप्रचारं कुर्याम।

## संस्कृतप्रचारार्थमुद्बोधनगीतम्-

पठन्तु संस्कृतं जना लिखन्तु संस्कृतं जनाः।
पिबन्तु मानवाः सदा स्वसंस्कृतामृतं मुदा। १॥
मातरः सुतैस्तथा सुताः स्वमातृभिः सह।
गृहे गृहे सदाऽलपन्तु संस्कृते परस्परम्॥ २॥

भ्रातरः कनिष्ठज्येष्ठभ्रातृभिः सहानिशम् ।
क्रीडनेऽशने सप्रेम व्यवहरन्तु संस्कृतम् ।। ३ ।।
लालनेषु पालनेषु लोरिगीतसंस्कृतम् ।
श्रावयन्तु मातृशक्तयोऽपि बालसंस्कृतम् ।। ४ ।।
प्रीतिभोजसङ्गमे सुपेयखाद्यव्यञ्जनम् ।
स्वदन्तु हर्षनिर्भराः पदे पदे सुसंस्कृतम् ।। ५ ।।
शयनकक्षमण्डनं स्वचित्रशालसज्जनम् ।
संस्कृते भवेत्तदा सुगीतकाव्यवर्णनम् ।। ६ ।।
गोष्ठयो भवन्तु संस्कृतज्ञपण्डितास्तदा ।
मनो विनोदयन्तु शास्त्रतत्त्वज्ञानचिन्तने ।। ७ ।।
पत्रिकाश्चलन्ति मासिकास्तथा च पाक्षिकाः ।
स्वलेखगीतप्रेषणेन वर्धयन्तु संस्कृतम् ।। ८ ।।
जनपदेषु संस्कृतं विहारगीतसंस्कृतम् ।
प्रयाणगीतसंस्कृतम् अरण्यगीतसंस्कृतम् ।। ९ ।।

# ऋग्वेदे महिलर्षीणां छन्दोयोगदानम्

डॉ0 रामकिशोर मिश्रः

ऋग्वेदश्छन्दसां सर्वप्रथमः परिचायकः प्रामाणिकश्च ग्रन्थोऽस्ति। अत्र गायत्रीमारभ्य अतिधृतिपर्यन्तं चतुर्दशसु छन्दस्सु वैदिकानामृषीणां रचनाः सङ्कलिताः सन्ति। अस्मात्पूर्वं न कोऽपि पद्यात्मको गद्यात्मको वा छन्दसां परिचयात्मको ग्रन्थः प्राप्यते। येऽपि ऋषयो मुनय आचार्याश्च बभूवुस्तेषां सर्वेषामपि ज्ञानविज्ञानयोरादिमूलमृग्वेद[1] एव। वैदिकमन्त्राश्छन्दोबद्धाः सन्ति[2]। ऋग्वेदात्पूर्वं छन्दोबद्धग्रन्थाभावाच्छन्दोमूलमपि स[3] एव।

वैदिकमन्त्ररचना पद्यबद्धा प्राप्यते। सर्वप्रथममेकमेव छन्द आसीत्[4], यत्पश्चाद् विभिन्नरूपं गृहीत्वा प्रतिपादमेकाक्षरवृद्ध्या सप्तप्रकारभभवत्[5]। इमानि सप्त छन्दांसि सन्ति- गायत्री, उष्णिक्, अनुष्टुप्, बृहती, पंक्तिः (विराट्), त्रिष्टुप्, जगती च। इमानि सप्त छन्दांसि वैदिकमन्त्रेषु प्राप्यन्ते। गायत्रीच्छन्दस उत्पत्तिरग्नेरभवत्; उष्णिक् सूर्यात्, अनुष्टुप् सोमात्, बृहती बृहस्पतेः, विराट् (पंक्तिः) मित्रावरुणात्, त्रिष्टुप् इन्द्रात्, जगती विश्वदेवादुत्पन्नेति[6] मन्यते।

१. 'सर्वज्ञानमयो हि सः।' मनुस्मृतिः- २/७

२. 'अग्निमीळे पुरोहितं' ऋग्वेदः-१/१/१

३. 'वेदात् षडङ्गान्युद्धृत्य----' महाभारतम्-२/४/९२

४. 'एकं छन्दो बहुधा चाकसीति।' भर्तृहरिकृतवाक्यपदीयम् १/१२१

५. सप्त छन्दांसि चतुरुत्तराण्यन्योऽन्यस्मिन्नध्यर्पितानि। अथर्ववेदः, ८/९/१९

६. अग्नेर्गायत्र्यभवत्सयुग्वोष्णिहया सविता सम्बभूव।
अनुष्टुभा सोम उक्थैर्महस्वान् बृहस्पतेर्बृहती वाचमावत्।
विराण्मित्रावरुणयोरभिश्रीरिन्द्रस्य त्रिष्टुबिह भागोऽह्नः।
विश्वान्देवाञ्जगत्या विवेश तेन चाक्लृप्त ऋषयो मनुष्याः।।

-ऋग्वेदः-१०/१३०/४-५

एतानि सप्त छन्दांसि वैदिकसंहितासु[७] प्राप्यन्ते, येषां सर्वप्रथमः प्रयोगः ऋग्वेदेऽभवत् । अतश्छन्दोमूलमृग्वेद एव ।

आचार्यः पतञ्जलिः[८] कात्यायनश्च[९] ऋग्वेदे चतुर्दश छन्दांसि प्रयुक्तानीति मन्येते । तयोर्मतानुसारं गायत्र्यादिप्रथमसप्तकस्य छन्दसां प्रयोगानन्तरमतिजगत्यादिद्वितीयसप्तकस्य छन्दांस्यपि-अतिजगती, शक्वरी, अतिशक्वरी, अष्टिः, अत्यष्टिः, धृतिः, अतिधृतिश्चेति सप्त तत्र प्रयुक्तानि प्राप्यन्ते । ऋग्भाष्यकारः श्रीवेङ्कटमाधवोऽपि ऋग्वेदे चतुर्दशच्छन्दःप्रयोगं[१०] मन्यते, परमतिधृतिच्छन्दसो न किमपि तत्रोदाहरणमुपलभ्यते । अत्र सर्वाधिकप्रचलितं लोकप्रियं च छन्दस्त्रिष्टुबस्ति, यस्मिन् ४२५३ ऋचः सङ्कलिताः सन्ति । द्वितीयं स्थानमस्ति गायत्र्याः, यत्र २४६७ ऋचः प्रणीताः सन्ति । तृतीयस्थानं जगतीच्छन्दोऽस्ति, यत्र १३५८ ऋचः संगृहीताः ।

त्रिष्टुब्जगत्योश्छन्दस्कारः प्रजापतिरस्ति गायत्र्याश्च छन्दस्कारो ब्रह्मा। एतद्वैदिकसूक्तकारसूच्या प्रमाणितं भवति । एतानि त्रीणि छन्दांस्येव वैदिकसंहितासु महत्त्वपूर्णानि लोके च प्रियाणि सन्ति, येषु सर्वाधिकजनप्रियं छन्दस्त्रिष्टुबस्ति, किन्तु मन्त्ररूपेण लोकसम्मानं गायत्री प्राप्नोति । एषां त्रयाणामपि छन्दसां पादाः क्रमशो वसु ८ रुद्र ११ सूर्य १२ वर्णैर्युक्ता भवन्ति, ये वैदिकच्छन्दसां विकासाधारो मन्यन्ते । अधिकतमानि वैदिकानि छन्दांसि त्वेषां त्रयाणां छन्दसां पादमिश्रणेन तत्र च न्यूनाधिकवर्णप्रयोगेन विकसितानि सन्ति[११] ।

---

७. '---- पंक्तिच्छन्दोऽउष्णिक्छन्दोबृहतीच्छन्दोऽनुष्टुप्छन्दो विराट्छन्दो गायत्रीच्छन्दस्त्रिष्टुप्छन्दो जगतीच्छन्दः ।' यजुर्वेदः-१४/१८

८. द्रष्टव्यम्-पातञ्जलनिदानसूत्रम् ।

९. द्रष्टव्या-कात्यायनकृता ऋक्सर्वानुक्रमणी ।

१०. 'चतुर्दशेत्थं कविभिः पुराणैश्छन्दांसि दृष्टानि समीरितानि ।
इयन्ति दृष्टानि तु संहितायामन्यानि वेदेष्वपरेषु सन्ति ।।-वेङ्कटमाधवः ।

११. आचार्यशौनककृतम् ऋक्प्रातिशाख्यम्-१७/२१,२३ ।
आचार्यकात्यायनकृता ऋक्सर्वानुक्रमणी-३/१०-११

चतुर्वेदेषु ऋग्वेदः सर्वप्रथमो वेदविभागोऽस्ति । अस्मिन् १०२८ सूक्तानि सन्ति, यानि ३८० सूक्तकारैः ऋषिभिः प्रणीतानि । सूक्तकारेषु प्राचीनतमः ऋषिः प्रजापतिः, ब्रह्मा, कश्यपः, भृगुः, अत्रिः, अङ्गिरा, वसिष्ठः, कण्वः, भरद्वाजः, गोतमः, गृत्समदः, वामदेवः, विश्वामित्रश्च प्रमुखाः सन्ति । अर्वाचीनः ऋषर्महाभारतरचयितुर्महर्षिवेदव्यासस्य पिता पराशरोऽपि ऋग्वेदे सूक्तकारोऽस्ति । एतेषाम् ऋषीणां वंशजानां गोत्रजानां च ऋषीणां मन्त्रा ऋग्वेदे प्राप्यन्ते । अनेन स्पष्टीभवति यद् ऋग्वेद एकस्य समयस्य रचना नास्ति, स तु परम्परागतानाम् ऋषीणां रचनासंग्रहो विद्यते, यः कृतयुगे, त्रेतायां द्वापरे च सम्भूतानाम् ऋषीणां रचनाप्रतिनिधिर्वर्तते ।

वैदिकाः ऋषयो यद्यपि वैदिकमन्त्राणां कर्तारः सन्ति, तथापि ते सर्वे मन्त्रद्रष्टारो मन्यन्ते । प्राचीना वैदिका विद्वांसो वेदान् अपौरुषेयान् स्वीकुर्वन्ति । तेषां मतेन परमेष्ठिप्रजापतिप्रभृतयः ऋषयो मन्त्राणां स्मर्तारो द्रष्टारश्च सन्ति[१२] । ये स्मर्तारो भवन्ति, त एव मानसदृष्ट्या तस्य स्मृतस्य द्रष्टारो भवन्ति । प्रजापत्यादयः ऋषयः पूर्वकल्पे दुष्करतपश्चरणादुत्पन्नस्मृतिसंस्काराः कल्पान्ते पाठकानामध्येतॄणां च क्षयाल्लुप्तमन्त्राणां कल्पान्तरे सुप्तप्रतिबुद्धवत्स्मरणं कुर्वन्ति, अतस्ते मन्त्रस्मर्तारः कथ्यन्ते ।

दर्शनं मानसिकं भवति । अर्थात्कस्यचिदृषेर्मानसोद्गारो मन्त्रदर्शनमस्ति । अतः स ऋषिर्मन्त्रद्रष्टा कथ्यते । यास्केन दर्शनाद् ऋषिः सङ्केतितः[१३] । अनेन ज्ञायते यद् यः ऋषिर्यस्य मन्त्रस्य द्रष्टाऽस्ति, स तस्यैव मन्त्रस्य प्रणेता भवति । अत एव छन्दांसि आर्षाणि कथ्यन्ते, यतस्तानि ऋषिमानसेन दृष्टानि भवन्ति । अद्यापि ये कवयः स्वरचनां कुर्वन्ति, ते तद्रचनालेखनात्पूर्वं मानसे तत्सम्बन्धितभावदर्शनं प्राप्नुवन्ति। तदनन्तरं ते स्वमानसोद्गारान् वाणीरूपेण परिवर्तयन्ति । अतस्ते तद्विरचनात्पूर्वं भावदर्शनात् रचनाया द्रष्टार एव भवन्ति । यो भावद्रष्टाऽस्ति, स एव रचयिता ।

१२. 'द्रष्टारः ऋषयः स्मर्तारः परमेष्ठ्यादयः ।' कात्यायनकृतं शुक्लयजुः सर्वानुक्रमसूत्रम् अनन्तदेवभाष्यसहितम्, पृष्ठम्-७

१३. 'ऋषिर्दर्शनादिति'-यास्कः । द्रष्टव्यम्-निरुक्तम् ।

अतः प्रजापतिपरमेष्ठ्यादयः ऋषयो ये मन्त्रद्रंष्टारः कथ्यन्ते, ते मन्त्ररचयितारः सन्ति ।

ये विद्वांसो वेदान् ईश्वरीयान् मन्यन्ते, तेषामयमेवाऽभिप्रायो यद् वैदिकानि छन्दासि मानसोद्गाराः सन्ति । अपौरुषेयो वेद इति कथनस्याऽभिप्रायो यद् वेदप्रणेतार ईश्वरवाचिनः ऋषयः सन्ति, येषु कोऽपि प्रजापतिः, कश्चिद् ब्रह्मा, कश्चन मनुः, कश्चिदग्निः, कोऽपि सूर्यः, कश्चिदिन्द्रः सूक्तकारेषु[१४] गण्यते । एषां देववाचिनामृषीणां मन्त्राः वेदेषु प्राप्यन्ते । अतो वेदा अपौरुषेया अर्थाद् ईश्वरकृता मन्यन्ते । वैदिकमन्त्राणां रचयितारः ऋषय इयन्तः प्राचीना बभूवुर्यत्कालान्तरे ते देवा अकथ्यन्त । तेषां मान्यता रचयितृस्थाने द्रष्टृरूपेण परिवर्तिता । अतो यः ऋषिर्मन्त्रद्रष्टाऽस्ति, स एव मन्त्रगतच्छन्दसां प्रणेता भवति । एतन्नावश्यकं यद् यः ऋषिर्गायत्र्यादिच्छन्दसामुद्गारकोऽस्ति, स एव तच्छन्दसां भेद-प्रभेदानामाविष्कारकोऽपि स्यात्, स एक एव ऋषिर्बहूनां छन्दसामाविष्कर्ता प्रयोक्ताऽपि भवितुं शक्नोति । इत्थं विभिन्नानां छन्दसां भेदानां प्रभेदानां च प्रकटयितारो विभिन्ना ऋषयश्छन्दस्कारा बभूवुः, ये तेषां प्रणेतारः सन्ति, परं मन्त्रद्रष्टारः कथ्यन्ते ।

ऋग्वेदे एषु मन्त्रद्रष्टृच्छन्दस्कारर्षिषु महिलर्षिकाः छान्दसदृष्ट्या बहु योगदानं चक्रुः । कापि महिलर्षिका छन्दःप्रवर्तिका, काचिच्च छन्दोभेदप्रकटयित्री तथा काचन छन्दःप्रयोक्त्री वर्तते । इमा महिलाः ऋषिकाः २३ सन्ति, यासां रचनाः ऋग्वेदे प्रथममण्डलादारभ्य दशममण्डलपर्यन्तं यत्र तत्र प्राप्यन्ते । इमा ऋषिकाः कलियुगात्पूर्वं युगत्रयस्यापि प्रतिनिधित्वं कुर्वन्ति । आसां यौगकालिकं विवरणं प्रस्तूयते-

## (१) कृतयुगस्य ऋषिकाः-

१-अदितिर्दाक्षायणी, २- इन्द्रमाता देवजामिः, ३- सर्पराज्ञी कद्रूः, ४- दक्षिणा प्राजापत्या, ५-इन्द्राणी, ६- शची पौलोमी, ७-सूर्या सावित्री, ८- यमी वैवस्वती, ९- वाक् आम्भृणी, १०- श्रद्धा कामायनी, ११-

---

१४. एतमेके वदन्त्यग्निं मनुमन्ये प्रजापतिम् ।

इन्द्रमेके परे प्राणमपरे ब्रह्म शाश्वतम् ।।

-मनुस्मृतिः-१२/१२३

लोपामुद्रा,१२- अगस्त्यस्वसा १३-शास्वती आङ्गिरसी, १४-इन्द्रस्नुषा, १५- जुहूः, १६- रोमशा बार्हस्पत्या, १७- ममता, १८- अपाला आत्रेयी, १९- विश्ववारा आत्रेयी ।

## (२) त्रेतायाः ऋषिकाः-

२०- घोषा काक्षीवती, २१- उर्वशी, २२- रात्रिर्भारद्वाजी ।

## (३) द्वापरस्य ऋषिका-

(२३) गौरिवीतिः ।

उपर्युक्तमहिलर्षीणां छान्दसयोगपरिचयोऽत्र दीयतेः-

## (१) अदितिर्दाक्षायणी

इयमस्ति प्रजापतिदक्षस्य पुत्री कश्यपमारीचस्य च पत्नी[१५] । अस्याः पिता दक्षो यजुर्वेदे[१६] मन्त्रकारोऽस्ति । पतिरस्याः ऋषिः कश्यपो मारीचः ऋग्वेदे प्रसिद्धः[१७] सूक्तकारोऽस्ति । इयम् आदित्यानां माता । अस्याः काव्यप्रतिभा वंशानुगता । अस्याः पुत्रेषु[१८] वरुणः, त्वष्टा[१९], विवस्वान्[२०] ऋग्वेदे सूक्तकाराः सन्ति, सविता च यजुर्वेदे[२१] मन्त्रकारोऽस्ति । इयम् ऋग्वेदीयमहिलर्षिकासु प्राचीनतमा प्रसिद्धतमा च ऋषिकाऽस्ति । ऋग्वेदेऽस्या[२२] एकं सूक्तं प्राप्यते, यत्र नव ऋचः सन्ति, यासु निचृत्पादनिचृद्विराड्भेदसहितम् अनुष्टुप्छन्दः प्रयुक्तम् । इयं छन्दस्कारेषु विराडनुष्टुप्छन्दस्कारस्थानं लभते ।

## (२) देवजामिः (इन्द्रमाता)

इयम् ऋग्वेदे प्रसिद्धसूक्तकारस्य[२३] इन्द्रस्य माताऽस्ति । अस्या एक[२४] सूक्तं तत्र प्राप्यते, यस्मिन् पञ्च ऋचः सन्ति, यासु

१५. 'द्वन्द्वं दक्षमरीचिसम्भवमिदं --- ।' अभिज्ञानशाकुन्तलम्-७/२७

१६. यजुर्वेदः- ३२/७२ १७. ऋग्वेदः- ८/२९, ९/९१

१८. ऋग्वेदः- १०/१२४ १९. ऋग्वेदः- १०/१८४

२०. ऋग्वेदः- १०/१३ २१. यजुर्वेदः- १३/२६

२२. ऋग्वेदः- १०/७२ २३. ऋग्वेदः- १०/४८-४९

२४. ऋग्वेदः- १०/१५३

निचृद्विराड्गायत्रीच्छन्दः प्रयुक्तम् ।

## (३) कद्रूः सर्पराज्ञी

इयम् ऋग्वेदस्य प्रसिद्धसूक्तकारकश्यपर्षेः[२५] पत्नी । ऋग्वेदेऽस्या[२६] एकं सूक्तं प्राप्यते, यस्मिन् तिस्र ऋचः सन्ति, यासु गायत्रीच्छन्दः प्रयुक्तम्। अस्याः केचन मन्त्रा[२७] यजुर्वेदे सामवेदे[२८] चापि प्राप्यन्ते । अस्या वंशे अर्बुद[२९] काद्रवेय ऊर्ध्वग्रावा[३०] आर्बुदिश्च ऋग्वेदे सूक्तकारौ स्तः ।

## (४) दक्षिणा प्राजापत्या

इयम् ऋग्वेदस्य प्रसिद्धसूक्तकारप्रजापतेः[३१] पुत्री । अस्याः केवलमेकं सूक्तमृग्वेदे[३२] प्राप्यते, यत्र ११ ऋचः सन्ति, यासु त्रिष्टुप्-गायत्रीच्छन्दसी प्रयुक्ते ।

## (५) इन्द्राणी

इयं देवराजस्य इन्द्रस्य पत्नी । अस्या ऋग्वेदे[३३] सूक्तमेकं प्राप्यते, यस्मिन्नेकादश ११ ऋचः सन्ति । अस्मात्सूक्ताद् भिन्नेऽन्यस्मिन्नेकस्मिन्[३४] सूक्तेऽपि षडृचोऽस्या उपलभ्यन्ते । इत्थमनया प्रणीताः सप्तदश १७ ऋचः सन्ति, यासु पंक्तिरनुष्टुप् च छन्दसी प्रयुक्ते । इयं छन्दस्कारेषु आर्चीस्वराडनुष्टुप्छन्दसः प्रवर्तिकाऽस्ति । प्रसिद्धेयं महिलर्षिका ।

## (६) शची पौलोमी

इयं दैत्यराजपुलोम्नः पुत्री देवराजस्य इन्द्रस्य च पत्नी । ऋग्वेदेऽस्या एकं[३५] सूक्तं प्राप्यते, यत्र षडृचः सन्ति, यास्वनुष्टुभः प्रयुक्ताः । प्रसिद्धेयं महिलर्षिका ।

## (७) सूर्या सावित्री

इयं सूर्यस्य पुत्री । ऋग्वेदेऽस्याः[३६] सूक्तमेकं लभ्यते, यत्र ४७ ऋचः

---

२५. अभिज्ञानशाकुन्तलम्-७/२७, वैदिक साहित्य और संस्कृति, पृष्ठ४६ २६. ऋग्वेदः-१०/१८९, २७. यजुर्वेदः-३/६, २८. सामवेदः-३/५/४ २९. ऋग्वेदः-१०/९४, ३०. ऋग्वेदः- १०/१७५, ३१. ऋग्वेदः- ९/१०१, ३२. ऋग्वेदः- १०/१०७, ३३. ऋग्वेदः- १०/१४५, ३४. ऋग्वेदः-१०/८६/२,६,९,१०,१५,१८, ३५. ऋग्वेदः- १०/१५९, ३६. ऋग्वेदः- १०/८५

सन्ति, यास्वनुष्टुप्-त्रिष्टुप्-जगती-बृहतीच्छन्दांसि प्रयुक्तानि ।

अस्मिन् सूक्तेऽस्या विवाहवर्णनम् । इयं छन्दस्कारेषु भुरिगनुष्टुभ उरोबृहत्याश्च प्रवर्तिका ।

## (८) यमी वैवस्वती

इयम् ऋग्वेदस्य प्रसिद्धसूक्तकारविवस्वतः[३७] सुता । ऋग्वेदे द्वयोः[३८] सूक्तयोरस्या द्वादश १२ ऋचः प्राप्यन्ते, यासु त्रिष्टुभोऽनुष्टुभश्च प्रयोगः। ऋग्वेदे दशमे मण्डले दशमे सूक्तेऽस्याः ऋक्सु प्रसिद्धयमयमीसंवादान्तर्गतकामविषयकवर्णनमस्ति ।

## (९) वाक् आम्भृणी

इयमम्भृणपुत्री । ऋग्वेदेऽस्या एकं[३९] सूक्तं प्राप्यते, यत्राऽष्ट ८ ऋचः सन्ति, यासु त्रिष्टुब्जगतीच्छन्दसी प्रयुक्ते ।

## (१०) श्रद्धा कामायनी

इयं कामगोत्रजा तथा ऋग्वेदीयप्रसिद्धसूक्तकारवैवस्वतमनोः[४०] पत्नी । ऋग्वेदेऽस्या एकस्मिन्[४१] सूक्ते पञ्च ५ ऋचः सन्ति, यास्वनुष्टुभः प्रयुक्ताः ।

## (११) लोपामुद्रा

इयम् ऋग्वेदस्य प्रसिद्धसूक्तकारस्य[४२] ऋषेरगस्त्यस्य पत्नी । ऋग्वेदस्यैकस्मिन्[४३] सूक्तेऽस्याः षड्ऋचः प्राप्यन्ते, यासु त्रिष्टुब्बृहतीच्छन्दसी प्रयुक्ते । अस्याः सूक्तेऽस्याः पत्युरगस्त्यस्यापि काश्चन ऋचः सन्ति । अतः सूक्ते दम्पतीसंवादवर्णनम् । अस्याः केचन मन्त्रा[४४] यजुर्वेदेऽपि प्राप्यन्ते। इयं छन्दस्कारेषु निचृदार्षीजगतीच्छन्दसः प्रवर्तिका ।

## (१२) अगस्त्यस्वसा

---

३७. ऋग्वेदः- १०/१३, ३८. ऋग्वेदः- १०/१०/१,३,५,६,७,११,१३ तथा ऋग्वेद-१०/१५४/१-५ ३९. ऋग्वेदः- १०/१२५ ४०. ऋग्वेदः- ८/२७ तः ३१ पर्यन्तं पञ्च ५ सूक्तानि। ४१. ऋग्वेदः- १०/१५१, ४२. ऋग्वेदः- १/१६५ तः १६९ पर्यन्तं ५ सूक्तानि । ४३. ऋग्वेदः- १/१७९, ४४. यजुर्वेदः-१७/१३,

इयमगस्त्यर्षिभगिनी तथा बन्ध्वादीनाम् ऋषीणां माता । अस्याः पुत्रा बन्धु-सुबन्धु-श्रुतबन्धु-विप्रबन्धुगौपायना ऋग्वेदे सूक्तकाराः[४५] सन्ति। ऋग्वेदेऽस्याः केवलैका[४६] ऋक् प्राप्यते, यस्यां पादनिचृदनुष्टुभः प्रयोगः।

## (१३) शाश्वती आङ्गिरसी

इयमाङ्गिरसकुलप्रवर्तकस्य ऋषेरङ्गिरसः पुत्री । अस्याः पतिरासङ्गप्लायोगिरपि ऋक्कारोऽस्ति,यस्य चतस्रः (४७) ऋचः ऋग्वेदे प्राप्यन्ते । अस्याः केवलैका ऋक्[४८] ऋग्वेदे लभ्यते, यस्यां विराट् त्रिष्टुभः प्रयोगः ।

## (१४) इन्द्रस्नुषा

इयं वसुक्रस्य[४९] पत्नी । अस्या पतिरिन्द्रस्य पुत्रः । ऋग्वेदे वसुक्र ऐन्द्रः[५०] सूक्तकारः । स्नुषाया अर्थः पुत्रवधूः[५१] । अत इन्द्रस्नुषा पुत्रवधूरिन्द्रस्य । अस्याः केवलैका[५२] ऋक् ऋग्वेदे प्राप्यते, यस्यां निचृत्त्रिष्टुभः प्रयोगः ।

## (१५) जुहूः

इयमृग्वेदीयसूक्तकारस्य बृहस्पतेः[५३] पत्नी, परमृग्वेदे ऋषिसूच्यामियं ब्रह्मजाया[५४] कथिता । अस्या ऋग्वेदे[५५] सूक्तमेकं प्राप्यते, यस्मिन् सप्त ऋचः सन्तिः, यासु त्रिष्टुप्छन्दः प्रयुक्तम् ।

## (१६) रोमशा बार्हस्पत्या

इयं बृहस्पतेः पुत्री । अस्याः[५६] पतिर्भावयव्योऽपि ऋक्कारः । अस्याः केवलैका ऋक्[५८] ऋग्वेदे प्राप्यते, यत्राऽनुष्टुप्छन्दः प्रयुक्तम्।

---

४५. ऋग्वेदः- १०/५७-६० चत्वारि सूक्तानि । ४६. ऋग्वेदः- १०/६०/६ .४७) ऋग्वेदः- ८/१/३०-३३, ४८. ऋग्वेदः- ८/१/३४, ४९. डॉ0 बलदेव उपाध्याय, वैदिक साहित्य और संस्कृति, परिशिष्ट-१, ५०. ऋग्वेदः- १०/२७-२९ त्रीणि सूक्तानि । ५१. अमरकोषः- २/६/९, ५२. ऋग्वेदः- १/१२६/६, ५३. ऋग्वेदः- १०/७१,ऋग्वेद पर एक ऐतिहासिक दृष्टि,पृष्ठ २७, ५४. ऋग्वेद संहिता, अजमेर, संवत् १९५७, ५५. ऋग्वेदः- १०/१०९ ५६. वैदिक साहित्य और संस्कृति, पृष्ठ ३७, ५७. बृहद्देवता- ३/१५६, ५८. ऋग्वेदः- १/१२६/७,

## (१७) ममता

इयमृग्वेदीयसूक्तकारस्य[५९] दीर्घतमसो माता । दीर्घतमसो जनक उचथ्यः[६०] ऋग्वेदे सूक्तकारः । अत इयमुचथ्यस्य पत्नी । अस्याः केवलैका[६१] ऋक् कथिता यस्यां विराट्त्रिष्टुप्छन्दः, परमियमृक् वैवस्वतयमस्य मन्यते ।

## (१८) अपाला आत्रेयी

इयमृग्वेदीयसूक्तकारस्य[६२] ऋषेरत्रेः पुत्री । ऋग्वेदेऽस्याः सूक्तमेकं[६३] प्राप्यते, यस्य सप्तसु ऋक्सु पंक्तिरनुष्टुप् च छन्दसी प्रयुक्ते।

## (१९) विश्ववारा आत्रेयी

इयम् ऋषेः अत्रेः पुत्रीः । अस्या एकस्मिन्[६४] सूक्ते षडृचः सन्ति, यासु त्रिष्टुप्छन्दः प्रयुक्तम् ।

## (२०) घोषा काक्षीवती

इयमृग्वेदीयसूक्तकारकक्षीवतः[६५] सुता । अस्या काव्यप्रतिभा पैत्रिकसम्पत्तिरस्ति । अस्या ऋग्वेदे[६६] सूक्तद्वयं प्राप्यते, यत्राऽष्टाविंशत-२८ ऋचः सन्ति, यासु त्रिष्टुब्जगतीच्छन्दसी प्रयुक्ते । अस्याः पुत्रः सुहस्त्यघौषेयः ऋग्वेदे[६७] सूक्तकारः ।

## (२१) उर्वशी

इयम् ऋग्वेदे ऋक्कारस्य पुरूरवस ऐलस्य[६८] पत्नी । दम्पत्योः[६९] सूक्तमेकम्, यस्मिन्नुर्वश्या नव[७०] ऋचः, यासु त्रिष्टुप्छन्दः।

## (२२) रात्रिर्भारद्वाजी

इयमृग्वेदीयप्रसिद्धसूक्तकारभरद्वाजस्य[७१] पुत्री। अस्याः ऋग्वेदे

---

५९. ऋग्वेदः- १/१४०-१६४, ६०. ऋग्वेदः- ९/५०-५२, ६१. ऋग्वेदः- १०/१०/२, ६२. ऋग्वेदः- ५/३७-४३, ६३. ऋग्वेदः- ८/९१ ६४. ऋग्वेदः- ५/२८ ६५. ऋग्वेदः- १/११६-१२५, ६६. ऋग्वेदः-१०/३९-४०, ६७. ऋग्वेदः- १०/४१, ६८. भागवत-९/१५/१, ६९. ऋग्वेदः- १०/९५, ७०. ऋग्वेदः- १०/९५/२,४,५,७,११,१३,१५,१६,१८, ७१. ऋग्वेदः- ६/१३०,

सूक्तमेकम्, [७२]यत्राष्टसु ऋक्सु गायत्रीच्छन्दः। सूक्तमेतत्कुशिक-सौभरस्यापि मन्यते ।

## (२३) गौरिवीतिः

इयं शक्तिगोत्रजा[७३] । ऋषिशक्तिः[७४] ऋक्कारोऽस्ति तथा ऋग्वेदीयसूक्तकारस्य ऋषिपराशरस्य पिता[७५] ऋषिसूच्या ज्ञायते । अस्या ऋग्वेदे द्वे[७६] ऋचौ त्रीणि[७७] च सूक्तानि-प्राप्यन्ते, येषु ३२ ऋचः सन्ति, तासु सर्वासु पंक्ति-त्रिष्टुबुष्णिग्बृहतीच्छन्दासि प्रयुक्तानि।

उपर्युक्तेन विवरणेन स्पष्टं भवति यद् ऋग्वेदे३८० ऋषीणां १०४३२ ऋक्सु २३ महिलर्षीणां २३३ ऋचो विशेषतो महत्त्वपूर्णाः सन्ति । आसु महिलर्षिकासु-अदितिः, इन्द्राणी लोपामुद्रा च छन्दोभेदप्रवर्तिकाः, शेषाश्च छन्दःप्रयोक्त्र्यः सन्ति । इमा वैदिककालस्य शिक्षिताः कवयित्र्य आधुनिक महिलानां शिक्षाप्रदाने विशेषोत्साहप्रदाः सन्ति ।

---

७२. ऋग्वेदः- १०/१२७, ७३. ऋग्वेद पर ऐतिहासिक एक दृष्टि, पृष्ठ-२७, ७४. ऋग्वेदः- ९/१०८/३, १४-१६ ७५. ऋग्वेदः- १/६५-७३,१/६९-ऋषिसूची । ७६. ऋग्वेदः- ९/१०८/१-२, ७७. ऋग्वेदः- १/७३-७४,५/२९ ।

# देशस्य वर्तमानपरिस्थिति-परिप्रेक्ष्ये वेदः

डॉ0 विनायक त्रिपाठी

अग्ने व्रतपते व्रतञ्चरिष्यामि तच्छकेयन्तन्मे राध्यताम् ।

इदमहमनृतात् सत्यमुपैमि ।।

साम्प्रतम् जगति सर्वत्र सर्वे जनाः भयभीताः उद्विग्नाः दुःखिताश्च सन्ति । यतः क्वचिज्जातिवादः क्वचित् प्रान्तवादः कुत्रचित् सम्प्रदायवादश्च प्रचलति ।

सर्वेषां वादानां निराकरणार्थं सर्वविधकल्याणप्राप्त्यर्थञ्च वेद एव सक्षमो वर्तते । वेदानुशीलनेनैव सर्वेषां जनानां शाश्वतिकं कल्याणं भवितुं शक्नोति। तत्र को वेदः इति जिज्ञासायामपौरुषेयशब्दराशिवाचको वेदशब्द अदादिगणे पठितात् परस्मैपदिनः विद् ज्ञाने इत्यस्माद्धातोः निष्पन्नो भवति। तथा वेद्यन्ते ज्ञाप्यन्ते धर्मादिपुरुषार्थचतुष्टयोपाया येन सः वेद इति ।

कृष्णयजुर्वेदभाष्यभूमिकायाम् सायणाचार्यैरपि इष्टप्राप्त्यनिष्ट-परिहारयोरलौकिकमुपायं यो ग्रन्थो वेदयति स वेद इत्युक्तम्। तथा च

**प्रत्यक्षेणानुमित्या वा यस्तूपायो न विद्यते ।**

**एनं विदन्ति वेदेन तस्माद्वेदस्य वेदता ।।**

इत्यपि कथितम् । वेदान् न केवलं भारतीया अपि तु पाश्चात्त्यविद्वांसोऽपि मुक्तकण्ठेन प्रशंसन्ति । ऋग्वेदविषये मोक्षमूलरमहोदयेनाप्यभिहितम्-

**यावत्स्थास्यन्ति गिरयः सरितश्च महीतले ।**

**तावदृग्वेदमहिमा लोकेषु प्रचरिष्यति ।।**

अस्माकं पूर्वजाः त्रिकालदर्शिनः महर्षयो वेदवेत्तारः आसन्। तैः वेद-

स्वाध्याये तत्संरक्षणे च स्वकीयं जीवनं समर्पितम् । तस्यैवेदम् फलं यदद्याप्यस्माकम् समक्षम् भारतस्यामूल्यज्ञाननिधेर्वेदस्य दर्शनं भवति ।

अस्माकं समाजे याः व्यवस्था विद्यन्ते ता सर्वाः वेदसम्मत्या महर्षिभिः निर्मिताः । मनुना सुस्पष्टमेव कथितम् यत् -

**चातुर्वर्ण्यं त्रयो लोकाश्चत्वारश्चाश्रमाः पृथक् ।**

**भूतं भव्यं भविष्यञ्च सर्वं वेदात्प्रसिद्ध्यति ।।**

**सर्वेषां तु स नामानि कर्माणि च पृथक् पृथक् ।**

**वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे ।।**

अन्यैरपि प्रोक्तम्-

**यः कश्चित् कस्यचिद्धर्मो मनुना परिकीर्तितः ।**

**स सर्वोऽभिहितो वेदे सर्वज्ञानमयो हि सः ।।**

**पितृदेवमनुष्याणां वेदश्चक्षुः सनातनम् ।**

**अशक्यञ्चाप्रमेयं च वेदशास्त्रविदर्हति ।।**

श्रीमद्भागवतमहापुराणे व्यासेनोक्तम्-

**सैनापत्यञ्च राज्यञ्च दण्डनेतृत्वमेव च ।**

**सर्वलोकाधिपत्यञ्च वेदशास्त्रविदर्हति ।।**

किं बहुना, यानीमानि लोके व्यावहारिकाणि संज्ञापदानि तानि सर्वाण्यपि वेदार्णवादेव समुद्धृतानि सन्ति - इति भारतीयाः विद्वांसः कथयन्ति । भारतीयमान्यतानुसारं वेदः सृष्टिप्रपञ्चस्य प्राथमिकी वाणी वर्तते । समग्रस्य सर्गक्रमस्य मूलकारणं वेद एव । किमधिकम्-स्थावरजंगमात्मकस्यास्य जगतो धारणं पोषणञ्चापि शाश्वतेन वैदिक-शब्दराशिनैव भवति । साम्प्रतिके वैज्ञानिकेऽपि युगे सकलभूभागस्य प्राचीनतमो ग्रन्थ वेद एव - इति विदुषां मतमस्ति ।

मानवस्य मानवतायाश्च प्राचीनतमस्वरूपस्य परिज्ञानाय तद् विकासक्रमानुसंधानाय च वेदानुशीलनमावश्यकमेव भवति । विश्वस्य प्राचीनतमग्रन्थत्वात् समस्तानां संस्कृतीनामुद्गमस्थानत्वेन वेद एव निश्चेतुं शक्यते ।

अतो मानवजातेरितिवृत्तस्य, संस्कृतेः भाषावैज्ञानिकविश्लेषणस्य च

परिज्ञानाय वेदाध्ययनमपरिहार्यम् । भारतीयसंस्कृतेः सभ्यतायाश्च मूलस्रोतो वेदः सहस्राब्दात् सततं व्याख्यातो रहस्यगर्भोऽद्यापि वर्तते । भारतीयाः शास्त्रविदः स्वीयसिद्धान्तस्य वेदमूलकत्वं साधयन्तः वेदम् प्रति स्वीयां श्रद्धां तत्प्रामाणिकताञ्च सुदृढं प्रदर्शयन्ति । पाश्चात्त्याः बहवो मनीषिणोऽपि वेदवाङ्मयानुशीलने कृतजीवनोत्सर्गाः सन्ति । अस्माकमृषयो वेदमन्त्रेष्वेव सर्वेषां वैज्ञानिकानां तत्त्वानामवलोकनं तत्परिवर्तनशक्तिञ्च दृष्टवन्तः परन्तु तैः जगद्विनाशभयात् वेदेषु वैज्ञानिकतत्त्वविचारान् परित्यज्याध्यात्मिकविषय एव सम्यग् विचारितः।

अद्य विज्ञानस्यैव फलमिदम् यत् कस्मिश्चिदपि देशे कोऽपि मनुष्यः 'क्षणमात्रमपि स्थिरबुद्ध्या तथा शान्त्या स्थातुं शक्नोमि' इति कथयितुं न समर्थः । सम्प्रति न केवलमस्माकम् राष्ट्रे अपि तु विश्वस्मिन् विप्लवो दरीदृश्यते । अस्मिन् विषये राष्ट्रियैकतायै सर्वे जनाः शासकाः नेतारश्च चिन्तिताः सन्ति । राष्ट्रियहितचिन्तनं वेदानुसारं स्याच्चेत् तदा राष्ट्रस्य कल्याणं निश्चप्रचम् । देशस्याभ्युदयार्थं मनीषिणः सन्नद्धा आसन् तेषाम् राष्ट्रियभावना वेदेषु दृश्यते । यथा:-

**ध्रुवं ते वरुणो राजा ध्रुवं देवो बृहस्पतिः ।**

**ध्रुवं त इन्द्रश्चाग्निश्च राष्ट्रं धारयतां ध्रुवम् ।। (ऋग्वेद : १०-१७३/५)**

तथा च-

**आब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायतामाराष्ट्रे राजन्यः शूर इषव्योऽतिव्याधिमहारथो जायताम् दोग्ध्री धेनुर्वोढानड्वानाशुः सप्तिः पुरन्ध्रिर्योषा जिष्णू रथेष्ठाः सभेयो युवास्य यजमानस्य वीरो जायतां निकामे निकामे नः पर्जन्यो वर्षतु फलवत्यो न ओषधयः पच्यन्तां योगक्षेमो नः कल्पताम् ।** -(शु० य० २२/२२)

राष्ट्रस्य समृद्ध्यर्थमस्मिन् मंत्रे परमात्मनः प्रार्थना विद्यते । हे ब्रह्मन्। अस्माकं राष्ट्रे विद्वांसः अध्ययनशीला भवेयुः, राजानः पराक्रमशीलाः स्युः, योद्धारोऽस्त्रसंधारणे कुशलाः शत्रुभेदनपरायणाः महारथिनश्च भवेयुः । अस्माकं राष्ट्रे गावः दुग्धपूरयित्र्यः, वृषभाः वहनशीलाः, अश्वाः शीघ्रगामिनश्च जायन्ताम् । स्त्रियः सर्वगुणसम्पन्नाः कार्यकुशलाश्च भवेयुः युवजनाः निर्भया वक्तारश्च भवेयुः । अस्माकं राष्ट्रे पर्जन्यः कामनायाम् सत्यां वर्षतु, ओषधयः फलयुक्ताः सुपक्वाश्च भवेयुः तथा अस्मद्देशीयानां सर्वेषां जनानां योगक्षेमः सम्यक भवेत् ।

साम्प्रतं राष्ट्रं तथा मातृभूमिं प्रति जनानां श्रद्धा भवेत् एतदर्थमथर्ववेदीयाः मन्त्राः द्रष्टव्याः सन्ति ।

**माता भूमिः पुत्रोऽहं पृथिव्याः, पर्जन्यः पिता स उ नः पिपर्तु ।**

**(अथर्ववेदः १२/१/१२)**

हे पृथ्वि ! यत्ते मध्यस्थानीयो जम्बूद्वीपस्तथा यत्ते नाभिस्थानीयः भारतदेशः तथा तव याः बलप्रदानात्मिकाः शक्तयः तथा तव शरीरावयव-भूतानि तीर्थादीनि स्थानानि सन्ति तासु भूमिषु वयं सुखपूर्वकं निवसामः। एवम् सर्वविधरसान्नादिसमृद्ध्या स्थिरान्तरवृत्तीन् रागद्वेषादिभिर्दोषैः संशोध्यास्माकं मनः दोषरहितं करोतु । यतः भूमिरस्माकं माता पर्जन्यो देवश्चास्माकं पिता अस्ति । द्वावपि अस्मान् पालयताम् । अपरस्मिन् मन्त्रेऽपि-

**विश्वम्भरा वसुधानी प्रतिष्ठा हिरण्यवक्षा जगतो निवेशिनी ।**

**वैश्वानरं बिभ्रती भूमिरग्निं इन्द्र ऋषभा द्रविणे नो दधातु ।।**

अर्थात् हे विश्वम्भरे ! रत्नादि धनानां धारयित्रि तथा प्राणिनां आश्रयदात्रि पृथिवि ! त्वमस्माकं राष्ट्रं सर्वविधधनैरलंकुरु ।

अस्मिन् संकटापन्नकाले परस्परं मित्रत्वं सौहार्दञ्चापेक्ष्यते । एतादृशी भावना मन्त्रेंऽस्मिन् विशेषरूपेण वर्तते-

**दृते हँ इमा मित्रस्य मा चक्षुषा सर्वाणि भूतानि समीक्षन्ताम् ।**

**मित्रस्याहं चक्षुषा सर्वाणि भूतानि समीक्षे । मित्रस्य चक्षुषा समीक्षामहे ।**

**(शु0 यजुर्वेदः ३६/१८)**

हे भगवन् ! सर्वे प्राणिनः माम् मित्रदृष्ट्या सम्यक् पश्यन्तु अर्थात् सर्वेषां प्रियो भूयासमहमपि मित्रस्यँ चक्षुषा सर्वाणि भूतानि पश्यामि । एवमहिंस्यमानाः परस्परम् अद्रोहेण सर्वे निर्भयाः सन्तु ।

भयभीतानां जनानां कृते निर्भयार्थं बहवो मन्त्राः वेदे सन्ति यथा-

**अभयन्नः करत्यन्तरिक्षमभयन्द्यावापृथिवी उभे इमे ।**

**अभयं पश्चादभयं पुरस्तादुत्तरादधरादभयन्नोऽस्तु ।। (अथर्ववेदः १९/१५/५)**

**अभयं मित्रादभयममित्रादभयं ज्ञातादभयं पुरो यः ।**

**अभयं नक्तमभयं दिवा नः सर्वा आशा मम मित्रं भवन्तु ।।**

इदानीम् परिवारपोषणार्थं जनाः प्रायः धनसंग्रहे संलग्नाः । वैदिक-सिद्धान्तानुसारं धनस्य स्वामी परमात्मा एव विद्यते । तेन प्रदत्तं धनमस्माभिः भोक्तव्यम् । इयम् व्यवस्था वेदेषु दृश्यते । यथा-

**ईशावास्यमिदं सर्वं यत्किञ्च जगत्यां जगत् ।**

**तेन त्यक्तेन भुञ्जीथाः मा गृधः कस्यस्विद्धनम् ।।**

(शु० य० ४०/१ )

जगतः सर्वाणि धनानि ईश्वरस्यैव वर्तन्ते अतः त्यागपूर्वकमुपभोगं कृत्वा जीवननिर्वाहः कर्तव्यः ।

वेदवाक्यानुसारं धनं कस्यापि नास्ति अतः ममेदं धनमिति आकांक्षा मा कर्त्तव्या । यद्येतादृशी भावना स्यात्तदा धनार्थं कुत्रापि विवादो न स्यात्।

साम्प्रतिके काले विरोधिभावनाप्रशमनाय ऋग्वेदीय-संज्ञानसूक्तस्यावलोकनमत्यावश्यकमस्ति । तत्र एका कथा विद्यते यत् राक्षसेभ्यः भयभीता देवा आत्मानं त्रातुं भगवन्तम् प्रार्थयन् । तेषां प्रार्थनया तुष्टो भगवान् प्रोवाच -

**संगच्छध्वं संवदध्वं सं वो मनांसि जानताम् ।**

**देवा भागं यथा पूर्वे सञ्जानाना उपासते ।। (ऋग्वेदः १०/१९१/२))**

मन्त्रेऽस्मिन् स्पष्टरूपेण आदेशोऽयम् भगवतः यत् सर्वैः एकीभूय गन्तव्यम् वार्तालापश्च कर्त्तव्यः,अन्येषां मनांसि ज्ञात्वैव परस्परानुकूलं व्यवहर्तव्यम्। तथा च-

**समानो मन्त्रः समितिः समानी समानं मनः सहचित्तमेषाम् ।**

**समानं मन्त्रमभिमंत्रये वः समानेन वो हविषा जुहोमि ।। (ऋक्० १०/१९१/३)**

भगवताऽऽदिष्टम् यत् सर्वेषां मानवानां विचाराः हितकराः स्युः, सभायां समानता भवेत्, कदापि विषमता न स्यात्, सर्वेषां मनः चित्तं च सर्वान् प्रति समानं स्यात्, समानेन मन्त्रेण सर्वानभिमन्त्रान् करोमि । सर्वे मिलित्वा देशसेवां कुर्वन्तु । अन्यच्च-

**समानी व आकूतिः समाना हृदयानि्वः ।**

**समानमस्तु वो मनो यथा वः सुसहासति ।। (ऋक् १/१९१/४)**

सर्वेषां प्रस्तावः लोककल्याणकारकः । सर्वदा सद्भावना स्यात्, राष्ट्रविरोधिभावना कदापि कुत्रापि न स्यात्। सांमनस्यसूक्तेऽपि

प्रेमभावनोत्पादकोपदेशः यथा-

**सहृदयं सांमनस्यमविद्वेषं कृणोमि वः ।**

**अन्यो अन्यमभिहर्यत वत्सं जातमिवाध्न्या ।।** (अथर्ववेदः ३/३०/१)

सर्वेषामन्तःकरणं मनश्च परस्परं विद्वेषरहितं स्यात्, यथा नवप्रसूता गौः वत्सं प्रति प्रेम्णा व्यवहरति तथैव सर्वैः व्यवहर्तव्यम् । अधुना समाजस्य राष्ट्रस्य वा का कथा, स्व स्व कटुम्बेऽपि कलहो वर्तते । कौटुम्बिकोऽपि व्यवहारः वेदेषु अवलोकनीयो वर्तते । यथा-

**अनुव्रतः पितुः पुत्रो माता भवतु सम्मनाः ।**

**जायापत्ये मधुमतीं वाचं वदतु शन्ति वाम् ।।** (अथर्व0 ३/३०/२)

पुत्रः पित्रोः इच्छानुकूलं कार्यं कुर्वन्नेव सेवां विदधीत । भार्यापत्ये शान्तियुक्तां मधुमती वाचं वदेत् । एवमाचरणे कृते सति कुटुम्बे, समाजे, देशे, वा कदापि कलहो न भवेत् ।

साम्प्रतं दायभागार्थं भ्रातरो भगिन्यश्च परस्परं विवदन्ति । तेषु विवादः न स्यात् इत्यभिप्रायेण अथर्ववेदीयोऽयं मन्त्रो द्रष्टव्यः

**मा भ्राता भ्रातरं द्विक्षान्मा स्वसारमुत स्वसा ।**

**सम्यञ्चः सव्रता भूत्वा वाचम् वदत भद्रया ।।** अथर्व (३/३०/३ )

भ्रातरः भगिन्यश्च परस्परं द्वेषरहिता स्युः, ते सर्वदा प्रियभाषणं कुर्वन्तु । अन्यश्च मन्त्रो यथा-

**ज्यास्वन्तश्चित्तिनो मा वियौष्ट संराधयन्तः सधुराश्चरन्तः ।**

**अन्यो अन्यस्मै वल्गु वदन्त एत सध्रीचीनान् वः संमनसस्कृणोमि ।।**

(अथर्व0 ३/३०/५)

मन्त्रस्य भावोऽयम् यत्सर्वे सर्वदा श्रेष्ठजनैः सह राष्ट्रहितं विचारयन्तः सुसंस्कारयुक्ताः भूत्वा स्व शिरसि एव देशसेवाभारग्रहणार्थमुद्यताश्च भवेयुः। पारस्परिकं विरोधं विहाय मधुरं भाषमाणाः मनसा राष्ट्रस्यैकतायै प्रयत्नाः सततं करणीयाः । अन्यस्मिन् मन्त्रे समेषाम् सम्प्रदायानां कृते समानतायै उपदेशः प्रदत्तो विद्यते । यथा-

**समानी प्रपा सह वोऽन्नभागः समाने योक्त्रे सह वो युनज्मि ।**

**सम्यञ्वोग्निं सपर्यतारा नाभिमिवाभितः ।** (अथर्व0 ३/३०/६)

अर्थात् सर्वेषां जलाहरणस्थानं भोजनालयश्च एकत्रैव स्यात्

सहैवोपविश्य सर्वैः भोक्तव्यम् । एकस्थले सहैवोपविश्य अग्नौ हवनं यागो वा कर्त्तव्यम् । वेदे धार्मिकसद्भावोऽपि प्रशंसनीयः । यथा-

**सध्रीचीनान् वः संमनसस्कृणोम्येकश्नुष्टीन्त्वननेन सर्वान् ।**
**देवा इवामृतं रक्षमाणाः सायं प्रातः सौमनसो वोऽस्तु**

**(अथर्व0 ३/३०/७)**

अत्र आदिष्टं भगवता, यथा देवाः अमृतप्राप्त्यै ऐकमत्ये भूत्वा समुद्रमन्थनं चक्रुः अमृतमवाप्य प्रसन्नतामनुभवन्ति स्म, तथैव यूयमपि अनुशासिता भूत्वा परस्परं प्रेम्णा कार्यं सम्पाद्य प्रसन्नतामनुभवत ।

यथा देवा संघीभूय आततायिनः राक्षसान् विजित्यामृतमप्राप्नुवन् तथैव मानवाः अपि इदानीम् पारस्परिकं संगठनं विधाय आत्मानं, समाजं, राष्ट्रञ्च असामाजिकतत्त्वेभ्यः त्रातुं समर्था भवेयुः । अत एव आतङ्कवादिनो विजेतुं राष्ट्रस्याखण्डतायै वेदोपदेशः एव प्रशस्तः समर्थश्च नान्यः पन्था विद्यते ।

अनयैव भावनया ऋषिभिः सततं शान्त्यर्थं प्रार्थना क्रियते -

**द्यौः शान्तिरन्तरिक्षं शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिः । वनस्पतयः शान्तिर्विश्वेदेवा शान्तिर्ब्रह्म शान्तिः सर्वं शान्तिः शान्तिरेव शान्तिः सा मा शान्तिरेधि ।।**

**ॐ शान्तिः शान्तिः शान्तिः ।।**

# THE LEGEND OF GHOṢĀ KĀKṢĪVATĪ

Dr. Umesh Chandra Sharma

The *RV* is traditionally considered to be a collection of hymns authored by a number of authors known as *Ṛṣis* (Seers). These seers invoke various divinities which represent the natural phenomena, for their personal well-being and for the well-being of the world at large. The authorship of the *RV* is dominated by a number of influential *Ṛṣi*-families-some of them being those of Gṛtsamada, Viśvāmitra, Vāmadeva, Gotama, Atri, Bharadvāja, Vasiṣṭha and Kaṇva. Among them are several female-seers (*Ṛṣikās*) also-the prominent ones being Apālā and Viśvavārā belonging to the Atris, and Ghoṣā belonging to the Bharadvājas (Aṅgirases). An Attempt is being made here to study the legend of Ghoṣā Kākṣīvatī from a socio-cultural point of view.

According to the *Sarvā,* Ghoṣā Kākṣīvatī is the seer of the *RV* X. 39-40[1]. She was a *Brahmavādinī* and the daughter of the Ṛgvedic seer Kakṣīvān. The two hymns attributed to her seership invoke the twin divinities Aśvins and are important as they mention several persons, e.g.Cyavana, Taugrya, Vimada, Śundhyu, Viṣpala, Rebha, Atri, Saptavadhri, Pedu, Śayu, Bhṛgu, Kutsa, Bhujya, Vala, Śiñjarai and Kṛṣa. Most of them are obscure personalities yet give an information about her contemporaneous personalities.

Both these hymns are also important as they provide the biographical details about Ghoṣā. Sāyaṇa tells us that she was a daughther of Kakṣīvān and a *Brahmavādinī.*[2] She was suffering from a disease so she could not be given in marriage to any person. She stayed at her father's place and there she became old. She got cured of her disease by the grace of the Aśvins and got back her husband. This fact also finds mention in the *RV* X.39.3 The *BD*[3] adds that Ghoṣā became sixty years old in her fathers's house. She knew that through the favour of the Aśvins, and by propitiating them, her father had obtained youth, long life, health etc. So she also praised the Aśvins in these two hymns (X.39-40). They, in consequence, cured her and gave her a husband and a son, Suhastya. According to the *Sarvā*, Suhastya Ghauṣeya is the seer of *RV* X.41.[4]

Her hymns are very interesting as they depict her personal feelings. Ghoṣā, very piteously, prays the divine Aśvins to cure her leprosy as they have cured many gods and men earlier.[5] At home she is growing old so let these grant her health[6] and youthful beauty and help her to get a rich chieften as her husband.[7] She requests them to enlighten her about amorous arts and ways of loves of which she is ignorant by circumstances.[8] The intense and pent-up desires of an old spinster who is perforce obliged to forego congugal bliss and married life, her disappointment and suffering, are very vividly and realistically portrayed in these hymns in a beautiful manner.

Ghoṣā seems to have drawn most of her allusions from the hymns to the *Aśvins* composed by her father Kakṣīvān.[9] Despite her indebtness to Kakṣīvān she is original in her style as she gives, to a considerable extent, a new background to these condensed allusions.[10]

From a reference in the *RV* it seems that the name of her husband might have been Arjuna.[11] Sukīrti Kākṣīvata, the seer of *RV* X.131, seems to be her brother[12]. Vṛcayā seems to have been her mother.[13]

On the basis of details provided in the *Sarvā* it may be assumed that Ghoṣā belonged to an illustrious line of Ṛgvedic seer-poets. Her position among the poets of Aṅgiras clan can be shown thus;-

The foregoing discussion may lead one to conclude that legend of Ghoṣā as found in *Ṛgveda* and its ancillaries is quite interesting from socio-cultural point of view. Like some of her predecessors- Bṛhaspati, Ucathya, Mamata Bharadvāja and Kakṣīvān-she also encountered the peculiarity of prevalent socio-moral conditions of the Ṛgvedic age. It also points out the difficulties faced by women, particularly daughters, in getting husband if they were afflicted by some external disease, even if they were learned to the extent of being composers of the Ṛgvedic hymns. The similar circumstances were encountered by other two famous Ṛgvedic poetesses-Aapālā, the seer of *RV* VIII. 91, and Viśvavārā, the seer of *RV* V. 28. It is clear that girls in all ages places faced similar difficulties. It is also possible that and he infliction by such type of disease converted her into becoming a *Ṛsikā*[14]

---

1. *Sarvā*, ed. U.C. Sharma, Aligarh, 1977, P. 35- यो वां षलूना काक्षीवती घोषा ------- ।
2. Sayaṇa on *RV* I. 117. 7
3. *BD* VII. 42-47-

आसीत्काक्षीवती घोषा पापरोगेण दुर्भगा ।
उवास षष्टि वर्षाणि पितुरेव गृहे पुरा ।।४२।।
आतस्थे महतीं चिन्तां न पुत्रो न पतिर्मम ।
जरां प्राप्तां मुधा तस्मात् प्रपद्येऽहं शुभस्पती ।।४३।।
यथैतौ मामकस्तात आराध्यावाप यौवनम् ।
आयुरारोग्यमैश्वर्यं सर्वभूतहने विषम् ।।४४।।
रूपवत्तां च सौभाग्यम् अहं तस्य सुता यदि ।
ममापि मन्त्रा प्रादुः स्युर्यैः स्तोष्येते मयाऽश्विनौ ।।४५।।
चिन्तयन्तीति सूक्ते द्वे वां परि ददर्श सा ।
स्तुतौ तावश्विनौ देवौ प्रीतौ तस्या भगान्तरम् ।।४६।।
प्रविश्य विजरारोगां सुभगां चक्रतुश्च तौ ।
भर्तारं ददुस्तस्यै सुहस्त्यं च सुतं मुनिम् ।।४७।।

4. *Sarvā*, op. p. 35- समानं तृचं सुहस्त्यो घौषेयः ।
5. *RV* X. 39. 11.

6. *RV* X 39. 3.
7. *RV* X. 40.5.
8. *RV* X. 40.11.
9. *RV* I. 116-118.
10. Cf. *RV* X.40.14.
11. *RV* I. 122.5.
12. *Sarvā,* op. cit., p. 39- अप प्राचः सुकीर्तिः काक्षीवतो---।
13. RV I. 51.13.
14. For details sec U.C. Sharma, "Legend of Dīrghatamas", Vishveshvarananda Indological Journal (Prof. K.V.Sharma Fel. Vol.) Hoshiarpur, 1980, pp. 26-35; and "The Legend of Kakṣīvān" Aligarh Journal of Oriental Studies (prof. R.S. Tripathi Comm. Vol.), Aligarh, 1985, pp. 35-44.

ABBREVIATIONS

*BD : Bṛahaddevatā* of Šaunaka

*RV : Ṛgveda*

*Sarvā : Sarvānukramaṇī* of Kātyāyana

# पातञ्जलयोगलक्षणम्

डॉ० परड्डी मल्लिकार्जुनः

यस्य ज्ञानदयापरस्य कृपया देवस्य जीवात्मनः
बद्धा शृङ्खलया सदैव विकृताः विश्रामशून्या पुनः ।
वैराग्यात्परमात् तृणीकृतजगज्जालाश्च शुद्धाशयाः
मुक्ता मोदपरा भवन्ति विमला वन्दे महेशं सदा ।। १ ।।
येन मानववर्गस्य चित्तादित्रयशुद्धये[१] ।
ग्रन्थरत्नत्रयं सृष्टं नतोऽस्मि मुनिपुङ्गवम् ।। २ ।।
चित्तशुद्धिकरो ग्रन्थो योगसूत्राभिधानवान् ।
रचितः प्रथितो लोके पतञ्जलिमहर्षिणा ।। ३ ।।
मनुष्याणां भवेच्चित्तं कारणं बन्धमोक्षयोः (२) ।
निरुद्धं मुक्तिदं भूयो विरुद्धं बन्धकारणम् ।। ४ ।।
चितवृत्तिनिरोधो[३] हि योगसामान्यलक्षणम् ।
वैराग्याभ्यासशीलेन[४] लभ्यं योगफलं परम् ।। ५ ।।
निरालम्बसमाधिस्तु[५] वैराग्यात्परमाद् भवेत् ।
अभ्यासाद् ब्रह्मचर्यादिसत्कारसेविताद्[६] भवेत् ।। ६ ।।
पञ्चतय्यो भवन्त्येव क्लिष्टाक्लिष्टतया पुनः ।
चित्तस्य वृत्तयो येषां निरोधान्मुक्तिरक्षया ।। ७ ।।
सर्वासामेव वृत्तीनां निरोधान्मुनिपुङ्गवः ।
मोक्षलक्ष्मीं समालिङ्ग्य मोदतेऽत्रैव जन्मनि ।। ८ ।।
जीवात्मा परमात्मेति भेदाभेदतया स्थितिः ।
तयोरैक्यं भवेद्योग[९] इति कैश्चिदुदाहृतम् ।। ९ ।।
पतञ्जलिमुनिप्रोक्तयोगसूत्रमतानुगाः ।
अङ्गीकुर्वन्ति तैरुक्तं सांख्यमार्गरता यतः ।। १० ।।

1/267); (4) vedāḥ pratiṣthitāh sarve purāṇe nātra sanśayaḥ 1 (Prabhasa-2/90); (8) sarva-vedārthāsārāṇi purāṇaṇi1 (Nāradīya - 1/9/97)."

15. H.H. Wilson, *A Sketch of the Religious Sects of the Hindus*, New Delhi, 1977, pp.30-264.
16. Sir Monier Williams, *Hindu Dharma* tr. Dr Maan Singh, Delhi, 1984, p.93.
17. *Ibid*., p.95.
18. *Ibid*., p.96; Acharya Baldev Upadhyaya, *Vaiṣṇava-Sampradāyon Ka Sāhitya Aura Siddhānta*, Varanasi, 1978, pp.297-323.
19. Sir R.G. Bhandarkar, *Vaiṣṇavism Šavism and minor Religious Systems,* Varanasi,1965, pp.39-41, 62-66.
20. For details see Dr Radha Rani, *Šrimadbhāgavatapurāṇa Para Ādhārita Śrī Kṛṣṇa-Svarūpa-Nirūpaṇa,* Unpublished Thesis (Sankskrit), Meerut University, 1982.
21. H.H. Wilson, *op.cit*., pp.34-36.
22. *Ibid*., p.34, f.n.1.
23. *Ibid*., p.35.
24. Cf. Sir Monier Williams, *op.cit*., p.97; H.H. Wilson, *op.cit*., p.139.
25. *Ibid*., p.119
26. *Ibid*., p.121, f.n.2.
27. *Ibid*., p.54; H.H.Wilson, *Hindu Religions*, Delhi, 1977, p.22 ff; Sir Monier Williams, *op.cit*., pp. 97-98.
28. R.S. *Prajāpati, Rāmānanda-Sampradāya Aura Sahitya*, Agra, 1984.
29. Nāgās, Sannyāsis, Vairāgīs, Rādhā Vallabhīs, Sanakādi-Samprādayīs, Sākhī Bhāvas, Kabīra Panthīs, Caraṇa-Dāsīs, etc.
30. Ishwar Chandra Tyagi, *Shaivism in Achient India*, Meerut, 1982, pp.1-23.
31. Dr Rāmaš aṇkara Tripāthī, Šivamahāpurāṇa Kī Dāršanika Tathā Dhārmika San:ālocanā, Vārāṇasi, 1976.
32. Prof. Rabindra Kumar Siddhantashastri, *Ś'aivism Through the Ages*, Delhi, 1975, pp. 102-114.
33. Dr S.S. Upadhyaya, The *Nāradīya Purāṇa*, Varanasi, 1983,

pp. 177-178.

34. H.H. Wilson, *A Sketch of the Religious Sects of the Hindus*, pp.191-238.
35. David N.Lorenzen, T*he Kāpālikas and Kālāmukhas*, New Delhi ,1972.
36. *Ibid*., pp. 8-9; also Cf. Rohan-A Dunuwila, *Saiva- Siddhānta Theology*, Delhi, 1985, p. 15, f.n. 1.

    In the various *Purāṇas,* different accounts are enumerated:

    "The *Vāmana-Purāṇa* lists, four sects : *Śaiva, Pāśupata,* Kālavadana, and *Kāpālika.Śaiva-Purāṇa* lists, four:*Śaiva siddhānta*-Mārgāstha, *Śaiva pāsupata, Śaīva Mahabratad-hara*,and Kāpālika. The *Skanda, Linga* and *Vāyua Purāṇas* also give accounts of Various Šaiva sects."

37. *VP*., Chapter II
38. *Ibid*., 11.13-14,16-77.
39. G.K. Pai, *Cultural History from the Kūrma Purāṇa*, Cochin, 1975, p.66.
40. David N. Lorenzen, *op.cit*., pp.7-9.
41. G.K. Pai, op.cit., p.66.
42. Rohan A. Dunuwila, *op.cit*., p.45.
43. G.K. Pai, *op.cit*., p.66; N. Gangadharan, The *Agni-Purāṇa,* Pt. I, Delhi, 1984, p.197 ff.
44. K.Ishwaran, *Religion and Society among the Lingāyats of South India*, Sahibabad (Ghaziabad), 1983, p.3.
45. *Ibid*., pp.1 ff.
46. Aghoris, etc.
47. H.H. Wilson, *op. cit*., pp. 252-253.
48. *Ibid*., p.253, f.n.2.
49. *Ibid*., p.246.
50. *Ibid*., pp.252-255.
51. H.H. Wilson, *op.cit*., pp.250-252
52. *Ibid*., p.252, f.n.2.

    The *Brahmavaivarta* also observes:

    "The animal sacrifices, it is true, gratify Durgā, but they, at the same time, subject the sacrificer to the sin which attaches to the destroyer of animal life. It is declared by

the *Vedas* that he who slays an animal is hereafter is slain by the slain."

53. *Ibid*., pp.254-255.
54. *Ibid*, p.263.
55. *Ibid*., pp.264-265.
56. James Hastings, Eneclopaedia of Religion and Ethics Vol.12, New York, 1958, p.141.
57. *Ibid*., p.142.
58. M.I. Khan, *op.cit*.; also M.I. Khan, *Sarasvatī in Sanskrit Literature*, Ghaziabad, 1978, pp.
59. M.I. Khan, *Brahmā in the Purāṇas*, pp.98-99.
60. *VDP*., XL XI. 14-16
61. Prof.Rabindra Kumar Siddhanta Shastree, *op.cit.*, p.115
62. "Indu, Inderjit, *The Science of Symbols* (Deeper view of Indian Deities), New Delhi, 1978, pp. 22-175.

    See detail of Brahmā, Viṣṇu, Śiva, Sarasvatī, Lakṣmī, Durgā, Gaṇeśa, Mahākālī, Naṭarāja, Śiva, Liṅga," for the symbols of their mages.
63. *AP*., XXXIX, 13-15
64. *Ibid*., XXXVIII, 1-51
65. *Ibid*., XLII. 1-25
66. *GP*., Chapters: XL VI and XL VIII
67. *VDP*., III. LXXXVI. 86-18
68. *Ibid*., III. 40, 47, 52, 55, 57, 64, 66, 67, 71, 76, 82
69. *AP*., XLIII. 1-28

# साहित्यस्य शास्त्रत्वविचारः

डॉ० गङ्गाधरपण्डा

शब्दार्थयोः सहितयोर्भावः साहित्यमिति मतं सर्वजनसम्वादि । केचन 'सहितानां काव्यानां परं भावः' साहित्यमिति स्वीकुर्वन्ति ।'एतद् व्युत्पत्त्यनुसारं काव्यसमष्टिरेव साहित्यपदेन व्यपदिश्यते; न व्यष्टिभूतं काव्यम् । एवं हि व्यष्टिभूतानां कृते रघुवंशमहाकाव्यम् नैषधकाव्यं माघकाव्यमित्यादयः प्रयोगाः समष्टिभूतानां कृते संस्कृतसाहित्यं कालिदास साहित्यमिति प्रयोगाः गृह्यन्ते ।

साधारणतः साहित्यशास्त्रमिति पदेनालङ्कारशास्त्रं काव्यशास्त्रं वा गृह्यते । प्रतापरुद्रीयटीकायामलङ्कारशास्त्रस्य नामकरणयाथार्थ्यं प्रतिपादितमस्ति । तद् यथा-''यद्यपि रसालङ्काराद्यनेकविषयमिदं शास्त्रं तथापि छत्रिन्यायेनालङ्कारशास्त्रमुच्यते[१]।'' छत्रिन्यायस्याभिप्रायोऽयं यद् बहुषु जनेषु केचन छत्रं धृत्वा गच्छन्ति तदा तेषामेव प्राधान्यं स्वीकृत्य छत्रिणो यान्तीति व्यपदेशो भवति । परन्तु व्याख्येयं रुचिकरा न भाति । कथमिति चेत् काव्यशरीरस्यालङ्कारा कटककुण्डलादिवत् । सुतरामस्य गौणस्थानं काव्ये रसप्राधान्यात् । यदि वामनमतानुसारं व्याख्या विधीयते तर्हि प्रासङ्गिकी स्यात् । यथा 'सौन्दर्यमलङ्कारः' इति अलङ्कारशास्त्रं सौन्दर्यपरकं शास्त्रमिति गृहीत्वाऽस्य समाधानं करणीयमिति ।

अनन्तरं काव्यशब्दस्य स्थाने साहित्यशब्दः साहित्यदर्पणे विश्वनाथकविराजेन स्वीकृतः । साहित्यशब्दस्यास्य व्युत्पत्तिं वक्रोक्तिजीवितकारः कुन्तक इत्थं करोति

'साहित्यमनयोः शोभाशालितां प्रति काप्यसौ ।
अन्यूनानतिरिक्तत्वमनोहारिण्यवस्थितिः[२]।।

अत एवान्यूनानतिरिक्तत्वमनोहारिण्यवस्थितिः साहित्य-पदेन व्यपदिश्यते ।

---

१. प्रतापरुद्रीयटीका, पृ॰३

२. वक्रोक्तिजीवितम्, १/१७

एतादृशस्य साहित्यशास्त्रस्यालङ्कारशास्त्रस्य वा शास्त्रत्वं कुत्रचिन्नोपलभ्यते । यतो हि शास्त्रपदेन विद्या उच्यते । ताश्च यथा-

अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ।
धर्मशास्त्रं पुराणं च विद्या ह्येताश्चतुर्दश ।।

एताभिश्चतुर्दशविद्याभिः सह आयुर्वेदधनुर्वेदगान्धर्वार्थशास्त्राणां मेलनेनाष्टादशविद्यास्थानं भवति । अत्रालङ्कारशास्त्रस्य गणनाऽभावादिदं शास्त्रं शास्त्रत्वं न भजतीति पूर्वपक्षिणां मतम् ।

इदानीं सिद्धान्तपक्षः प्रस्तूयते -

वेद्यते तत्त्वमनयेति विद्या,इति व्युत्पत्त्यनुसारं साहित्यस्यापि विद्यात्वमायाति रसध्वनिगुणरीत्यलङ्कारतत्त्वानां सन्निवेशत्वात् ।

तर्हि किं नाम शास्त्रलक्षणं येन साहित्यस्यापि शास्त्रत्वं सिद्ध्यति। 'शासु अनुशिष्टौ' इति धात्वर्थानुसारेण अनुशासनप्रधानाया विद्याया एव शास्त्रत्वमभ्युपेयम् । एवं काव्यविषयिणी साहित्यविषयिणी वाऽनुशासनप्रधाना विद्या काव्यशास्त्रपदेन च व्यपदेश-सौलभ्यं भजते । तस्माद् दृश्यश्रव्यत्वभेदेन द्विविधयोः काव्ययोर्मध्ये एकस्य दृश्यकाव्यस्यैव शास्त्रत्वं भरतमुनिरङ्गीकरोति । नाट्यशास्त्रं शास्त्रत्वेन स्वीकृत्य स प्रमाणं परिपोषयति । यथा-

'न तज्ज्ञानं न तच्छिल्पं न सा विद्या न सा कला ।
न स योगो न तत्कर्म नाट्येऽस्मिन् यन्न दृश्यते(३) ।।'

साहित्यतत्त्वनिरूपणप्रवृत्तानां विद्यानामनुशासनप्रधानत्वात् शास्त्रत्वं तावत्सिद्धम् । अनुशासनं नाम प्रवृत्तिनिवृत्तिपरकम् । एतादृशं काव्यं प्रभुसम्मितशब्दप्रधानवेदादिशास्त्रेभ्यः सुहृत्सम्मितार्थतात्पर्यवत् पुराणेतिहासशास्त्रेभ्यश्च शब्दार्थयोर्गुणभावेन रसाङ्गभूतव्यापारप्रवणतया विलक्षणम्। एतल्लोकोत्तरवर्णना-निपुणकविकर्म काव्यं कान्तेव सरसतापादनेनाभिमुखीकृत्य रामादिवत् प्रवर्तितव्यं न रावणादिवदित्युपदेशद्वारेणानुशासयति । अतः ध्वन्यालोककाव्यप्रकाशप्रमुखानामनुशासनप्रधानानां काव्यानां शास्त्रत्वं

---

३. नाट्यशास्त्रम् १/११४

सिद्ध्यति । लोचनकारेणाभिनवगुप्ताचार्येण सुस्पष्टमभिहितं यत् --------
एतच्छास्त्रद्वारेण-----।

सरस्वतीकण्ठाभरणस्य रचयिता भोजदेवः काव्यशास्त्रस्य शास्त्रत्वं स्वीकृत्य 'शासनात् शास्त्रम्' इति व्युत्पत्त्याधारेण लिखति-

'यद् विधौ च निषेधे च व्युत्पत्तिरेव कारणम् ।
तदध्येयं विदुस्तेन लोकयात्रा प्रवर्तते ।।' (४)

अस्य मतानुसारं विधिनिषेधरूपज्ञानस्य षट् कारणानि भवन्ति । तानि यथा-

''काव्य शास्त्रेतिहासौ च काव्यशास्त्रं तथैव च ।
काव्येतिहासः शास्त्रेतिहासस्तदपि षड्विधम्।।'' (५)

केचन शास्त्रस्योपदेशपक्षं निराकृत्य सद्यःपरनिर्वृतिपक्षमङ्गीकुर्वन्ति। रसास्वादनद्वारा अलौकिकानन्दानुभूतिर्जायते । शास्त्रस्य शासनार्थमेते न स्वीकृत्य ''शंसनात् शास्त्रम्' ' इति व्युत्पत्तिं कुर्वन्ति । अनया व्युत्पया काव्यस्यात्मा सुरक्षितो भविष्यतीत्यपरः पक्षः सिद्धान्तपक्षः। एवमुपर्युक्तयुक्तिभिः साहित्यस्य शास्त्रत्वं सिद्धम् ।

---

४. सरस्वतीकण्ठाभरणम् २/१३८

५. तदेव २/१३९

# ''साहित्ये सत्यं शिवं सुन्दरम्'' - एकमनुशीलनम्

आचार्यपण्डित आद्याचरणझा

१. अर्वाचीनसाहित्यिकाः प्रायः सर्वत्र काव्य-साहित्यस्याधारभूतं- ''सत्यं शिवं सुन्दर'' मित्युद्घोषयन्ति । प्राच्यसाहित्यग्रन्थे ''सत्यं शिवं सुन्दर'' मितिशब्देन न कुत्राप्युल्लेखो दृश्यते न च तत्र कश्चिद्विचारोऽपि संलक्ष्यते। अतोऽत्र विचारणीयं यदिदं श्रुतिसुखावहं मनोहारि वाक्यं ''सत्यं शिवं सुन्दर'' मिति किं कथमाधुनिककाव्यमर्मज्ञाः व्याकरणस्य ''शिवसूत्रमिव'' साहित्ये एतस्य मूलाधारतां प्रतिपादयन्ति ।

२. अत्रेदं विचाणीयं यदेतन्मधुमयवाक्यं किमाधुनिकपाश्चात्त्यमेव, अथ चान्यथाऽपि सम्भवम् । तत्र गम्भीरपर्यालोचनेनानुसन्धाने च निश्चितं ज्ञातं यदिदं 'सत्यं शिवं सुन्दरं' न केवलं नवीनमपितु प्राचीनतमं विद्यते। केवलं पदलालित्येन 'सत्यं शिवं सुन्दर' मिति वाक्यं विन्यस्य तदाधारभूतमेव काव्य-साहित्यमिति प्रतिपादयन्ति पाश्चात्त्याः ।

३. समीक्षासन्दर्भे दृष्टं यत् भगवता श्रीकृष्णेन श्रीमद्भगवद्गीतायां ज्ञानकाण्डे सप्तदशाध्याये वाङ्मयतपःप्रकरणे प्रोक्तम् :- ''अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत्, स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते'' इति। सहसा प्रकाशः प्राप्तः । तथा हि ''पदसमूहो वाक्यं'' रसात्मकं वाक्यं काव्यं, रमणीयार्थप्रतिपादकः शब्दः काव्यं ध्वन्यर्थप्रतिपादकः शब्दो वा काव्यमित्यादिकाव्यलक्षणेषु पदवाक्ययोरेव काव्यत्वं निश्चितम्। साहित्यस्य काव्याङ्गतया तत्परिभाषामूलकमेव साहित्यम् ।

४. अत्र विचारयन्तु काव्यमर्मज्ञा वाक्यं तदेव यदनुद्वेगकरम् । अनुद्वेगकरत्वं च तदैव भवितुमर्हति यदा तद्वाक्यं सत्यं, प्रियं-सुन्दरं हितं-शिवं (कल्याणप्रदं) च । सूक्ष्मदृष्ट्या विलोकनेन स्पष्टं प्रतिभाति यत् 'सत्यं प्रियहितं च तदिति गीतावाक्यमेव ''सत्यं शिवं सुन्दर''

मित्यस्यान्तःस्थितं मूलतत्त्वम् । भगवद्वाक्यानुसारं सत्यप्रिय-हितातिरिक्तं किमपि वाक्यं प्रेक्षावद्भिरुपेक्षणीयमिति शाश्वतः समुपदेशः। किमपि रसात्मकं रमणीयार्थप्रतिपादकं वा सत्य-प्रिय (सुन्दर)-हित (शिव)- मन्तरा वाक्यत्वपदं प्राप्तुं न शक्नोति ।

५. अत्रेत्थं चिन्त्यं यदिदं 'सत्यं शिवं सुन्दरं' कया रीत्या सर्वत्र संयुज्यते। तत्र साहित्यशब्दस्य व्युत्पत्त्यैव सर्वं सुस्पष्टं भवितुमर्हति । यथा-

हितेन कल्याणेन सहितस्य भावः साहित्यम्, सहितानां सकल-दर्शनानां काव्यकलाकौशलादीनां च भावः =सत्ता यत्र तत् साहित्यम् । तथा च तत्र ते एव रसाः, ज्ञानविज्ञानकलाकौशलादयश्च स्थायित्वं प्राप्नुवन्ति यत्र 'सत्यं' वर्तते । सत्यं विना किमपि काव्य-साहित्यं क्षण-स्थायि भवति, न तत्र कश्चित् प्रेक्षावान् प्रवर्तते । सत्यं च सदैव शिवं कल्याणकारकं भवति-नात्रापि काचिद्विप्रतिपत्तिः । ''सत्याभावे शिवाभावः'' इति सुस्पष्टमेव ।

६. काव्ये च रमणीयार्थप्रतिपादकता सरसता वा सौन्दर्या-भावेऽसम्भवमेव, यतो हि ''कान्तासम्मिततयोपदेशयुजे'' इति दिशा सुमधुरौषधिरूपेणैव सरससुन्दरशब्दैः सत्पथमानेतुं काव्यमेव क्षमं यतो हि मनोहरशब्दप्रतिपादनस्यानिवार्यता । सद्यः सत्यस्य स्वरूपं कठोरमेव, परिणामे च सुखावहं, तत्र ज्ञानिन एव प्रवर्तन्ते न खलु सर्वसाधारणाः । काव्य-साहित्यद्वारा सर्वसाधारणैरपि रामादिवत् प्रवर्त्यते न रावणा-दिवदिति स्पष्टम् ।

७. 'प्रिय' शब्दं प्रतिपादयता भगवता च प्रियशब्दस्यानुद्वेग-करत्वेनिवार्यता प्रदर्शिता । फलतः प्रियशब्देन सुन्दरमित्यायातम् । तदेव काव्यं सार्वजनीनं (सर्वजनाय हितं-सार्वजनीनम्) यत् ''सत्यं शिवं सुन्दर'' मिति । यत् सत्यं तत् शिवं, सत्यं शिवं च तदैव प्रियतमं यदा तत् सुन्दरम्। इदमेव मूलभूतं तत्त्वं रहस्यं च ।

८. संक्षेपेणैतेन ज्ञायते निश्चीयते च यदर्वाचीना विशेषतो हिन्दी-साहित्य-समीक्षकाः नात्र ध्यानं प्रदत्तवन्तः । 'सत्यं शिवं सुन्दर' मिति शब्दः आंग्लभाषायाः "Beauty is truth and truth is the Beauty and all the blesses auspicious Prosperities and happiness" - इत्यस्या-

नुवादं कुर्वन्तः पाश्चात्त्यपथमेवानुसरन्ति । किन्तु पाश्चात्त्यानामयं सिद्धान्तः प्राच्यसिद्धान्तानुसार एव ।

९. फलतः ''सत्यं शिवं सुन्दर'' मिति रहस्यमयं मधुमयं वचः श्रीमद्भगवद्गीतानुसारि, नात्र कश्चन सन्देहलवः ।

# संस्कृतसाहित्ये राष्ट्रियचेतना

पं० चन्द्रदीप शुक्लः

संस्कृतसाहित्ये वेदानां सर्वोच्चस्थानं विवादरहितं सर्वविदितमिति न तिरोहितं प्रेक्षावतां विदुषाम् । वेदाध्ययने एतादृशं पन्थानम् अन्वीक्ष्य वर्षसहस्रेणापि सम्पूर्णवेदाध्ययनं न सुकरम् इति विचिन्त्य परमकारुणिको भगवान् वेदव्यासः विनियोगानुकूलतया ऋग्यजुःसामाथर्वत्वेन चतुर्धा वेदं विभक्तवान् । प्रथमे हि वेदा अपौरुषेयाः । वेदः शब्दप्रधानः । प्रभुः वाङ्मात्रेण प्रवर्त्तको निवर्त्तकश्च भवति । अतः प्रभुसम्मितो राजतुल्यो वेद इति । ततो न केवलम् आज्ञारूपत्वं वेदमातुः, परं मातृवत् परमकारुणिकत्वमपि विलसतीति निश्चप्रचम् ।

सुर-भारती-रचिते वैदिकसाहित्ये लौकिकसाहित्ये च राष्ट्रियोत्थानक्रमे विचार-साम्यं परस्परं सौमनस्यं, मित्रभावश्चादिष्टं भवति । वेदमन्त्रे काव्यादिग्रन्थे च राष्ट्रहिताय बहुधा मन्त्रादयः सूक्तयश्च राष्ट्रियैकताचेतनायाः प्रतीकाः वर्त्तन्ते । परन्तु यस्मिन् देशे वेदानामेव दुरवस्था, तत्र का कथा अन्येषाम् । अत एव वेदानां विधिपूर्वकं स्वाध्यायेन रक्षा विधेया । सम्प्रति यदि देशे वेदानां पठनं पाठनं न स्यात् तदा शान्ति-सुव्यवस्था कदापि नैव सम्भाव्यते । तस्मात् राष्ट्रियैकताचेतनामार्गे विधिपूर्वकं वेदाध्ययनं परमावश्यकम् ।

विश्वस्य प्राचीनतमे ग्रन्थे ऋग्वेदे सर्वप्रथमम् अनेके मन्त्राः एतादृशाः सन्ति, येभ्यो राष्ट्रियैकतायाः सम्यक् परिचयः प्राप्यते । अनेकेषु स्थलेषु सामाजिकं जीवनं निर्वाहयितुम् उत्प्रेरकाः सूपदेशाः प्रदत्ताः विराजन्ते । निम्नलिखिते मन्त्रे राष्ट्रियैकताचेतनायाः समुद्घोषः प्रतीयते । यथा हि-

''संगच्छध्वं संवदध्वं सं वो मनांसि जानताम्
देवा भागं यथा पूर्वे सञ्जानाना उपासते ।
समानी व आकूतिः समाना हृदयानि वः
समानमस्तु वो मनो यथा वः सुसहासति ।''

अपि चान्यत्र सर्वप्राणिनां कृते मैत्र्यभावस्याभिकामना द्योतते । यथा हि-

''मित्रस्य चक्षुषा सर्वाणि भूतानि समीक्षन्ताम् ।''

इति । मन्त्रेऽस्मिन् राष्ट्रियैक्यचेतनायाः भावना परिस्फुरति । राष्ट्रहिताय वेदमन्त्रमाध्यमेन अस्माकम् ऋषिभिः बहुधा मन्त्राः प्रोक्ताः यथा-

''ओऽम् आब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायताम् । आराष्ट्रे राजन्यः शूर इषव्योऽतिव्याधि महारथो जायताम्। दोग्ध्री धेनुर्वोढानड्वान् आशुः सप्तिः पुरन्धिर्योषा जिष्णु रथेष्ठाः सभेयो युवास्य यजमानस्य वीरो जायताम्। निकामे निकामे नः पर्जन्यो वर्षतु फलवत्यो न ओषधयः पच्यन्ताम् । योगक्षेमो नः कल्पताम् ।''

अर्थात् हे ब्रह्मन् अस्माकं राष्ट्रे ब्राह्मणाः नृपाः सदाचारिणः वीराश्च भवेयुः । गावः दुग्धदात्र्यः, वृषभाः पुष्टाः, अश्वाः शीघ्रगामिनः, नार्य आचारवत्यः, रथिनः विजयशीलाः, युवानश्च सभायाः समाजस्य च कर्मसु कुशलाः भवेयुः, यज्ञकर्त्तुः पुत्राः वीरा भवेयुः पर्जन्यः पर्याप्तं वर्षतु, ओषधयः सकलशक्तिमत्यो भवेयुः, सर्वेषां योगक्षेमो भवेत् । अस्माकं पूर्वाचार्याणाम् इयम् अभिवाञ्छा आसीत्, यदस्माकं राष्ट्रं धनधान्यादि-सम्पन्नतां प्राप्य सततं जगति अभिवर्धताम् ।

अथर्ववेदे जन्मभूमेः मातृरूपा भावना विश्रुता वर्त्तते । पूर्वाचार्याः ऋषयः जन्मभूमिं श्रद्धया प्रणमन्ति च । यथा-

''भूमे मातर्निधेहि मा भद्रया प्रतिष्ठितम् ।

तस्यै हिरण्यवक्षसे पृथिव्या अकरं नमः ।।

माता भूमिः, पुत्रोऽहं पृथिव्याः, पर्जन्यः पिता स उ नः पिपर्तु ।''

अर्थात् पृथिवी मे माता, अहं पृथिव्याः पुत्रः, पर्जन्योऽस्माकं पिता, सोऽस्मान् अन्नादिभिः परिपूर्णान् करोतु। वस्तुतः राष्ट्रियभावनायां चेतनायाः अकल्पनीया कल्पना स्तुत्या अस्ति।

भारतीय-राष्ट्रियतायाः विरोधिनां विनाशाय आर्याः सर्वतोभावेन समुत्सुकाः दृश्यन्ते । ते पूर्वाचार्याः वदन्ति, हे मातः ! ये अस्मान् द्विषन्ति, ये आक्रामन्ति ये चास्माकमशुभं चिन्तयन्ति तेषां दुष्टानां जनानां त्वं

विनाशं कुरु । यथा हि-

योनो द्वेषत् पृथिवि यः पृतन्यात् । योऽभि दासान् मनसा यो वधेन तं नो भूमे रन्धय पूर्वकृत्वरि ।

राज्यशासनेऽपि वेदमन्त्राः राजानम् उपदिशन्ति राष्ट्रोन्नयनार्थम् यथा हि- ऋग्वेदस्य षष्ठमण्डले सू0 ३०, मं0 ३ ॥

''अद्या चिन्नू चित्रदपो नवीनां यदाभयो अरदो गातुमिन्द्रः । नि पर्वता अद्मसदो न सेतुस्त्वया दृढानि सुक्रतो रजांसि ।

यस्य गावावरूषा सूयवस्यू अन्तरूषु चरणे रेरिहाणा । स सृञ्जयाय तुर्वशं परादाद् वृचीवतो दैववाताय शिक्षन्।'' मन्त्रेऽस्मिन् राष्ट्रसंवर्धनार्थं नृपाणां बलस्यौजसश्च प्राधान्यं स्वीक्रियते।

अथर्ववेदस्य बहुशः मन्त्राः देशभक्तेः चेतनाभावनया युक्ताः सन्ति । पृथिवीसूक्तम् आर्याणाम् राष्ट्रियगानं कथयितुं युज्यते । तन् मातृभूमेरभिवन्दनायां राष्ट्रवन्दना प्रतीयते ।

''ध्रुवं ते राजा वरुणो ध्रुवं देवो बृहस्पतिः।
ध्रुवं त इन्द्रश्चाग्निश्च राष्ट्रं धारयतात् ध्रुवम् ।''

मन्त्रेऽस्मिन् राष्ट्रस्य स्थिरतायै रक्षायै अभिवृद्धये वरुणस्य बृहस्पतेः बुद्धेः इन्द्रस्य क्षात्रबलस्य, अग्नेश्च सहयोगः प्रार्थितः । तत्र यज्ञादि-कर्मानुष्ठानस्य च साहाय्यम् अपेक्षितम् ।

पूर्वमेव प्रतिपादितं यत् सुरभारती-समुदिते विविधे प्राचीन-आर्षकाव्ये राष्ट्रियैकतायाः एकत्वपरकः विचारः सम्पादितः । विश्वस्यादिमेषु वैदिकग्रन्थेषु उपनिषद्ग्रन्थेष्वपि राष्ट्रियचेतनाभावनायाः प्रादुर्भावः प्रतीयते । यथा हि-

''ॐ सह नाववतु सह नौ भुनक्तु सह वीर्य करवावहै ।
तेजस्वि नावधीतमस्तु मा विद्विषावहै ।''

इत्यत्र राष्ट्रियविचारस्य सन्देशः उपनिषदां सर्वस्मिन् काले सर्वत्र स्वीकार्यः ग्राह्यश्चेति । जीवने सकलं कार्य सम्पादयितुं सहजीवनम्, सह-भोजनम्, सहशिक्षणम् अभिवाञ्छितम्। अयमेव सन्देशः राष्ट्रियजीवनस्य प्रवर्धनार्थं समुद्घोषः । अनेन सन्देशेन राष्ट्रियैकता परिस्फुरिता भविष्यति।

उपनिषदां सार्वभौमः, सार्वयुगीनः नयः राष्ट्रसमृद्धये प्रेरणाप्रदः । अयं सन्देश एव विश्वस्मिन् ऐक्यजीवनम् आह्वयति । विश्वबन्धुत्वसन्देशोऽयं जगति राष्ट्रियैकताचेतनायाः प्रतीकः ।

आदिकविः वाल्मीकिः विश्वस्य हि हितचिन्तक आसीत् । कवेः मनसि करुणा सदा वरीवर्तिस्म । एषां कवीनां महाकाव्यमूलमिदमस्ति-

> ''मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः ।
> यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम् ।।''

करुणाजनकं काव्यमूलमिदं विश्वबन्धुत्वं दर्शयति । आदिकाव्ये रामायणे वर्णिता कथा सम्पूर्णभारतं राष्ट्रियैकतायाः एकसूत्रे गुम्फयित्वा सांस्कृतिकीं भौगोलिकीञ्चैकतां स्थापितवती, अत एवेदं राष्ट्रियकाव्यत्वेन विश्वविश्रुतम् । अस्मिन् आदिकाव्ये जनजीवनस्यानुसारणार्थं ये विश्वकल्याणार्थं विविधाः राष्ट्रियोचिता उदात्तगुणाः वर्णिताः सन्ति ते रामराज्यस्यादर्शभूताः राष्ट्रियचेतनाभावनायाः प्रतीकाः परिचायकाः स्थिताः । स्वतन्त्रेऽस्मिन् भारते देशे रामराज्यस्य वैशिष्ट्यं प्रसिद्धम् । रामराज्यस्य राजतन्त्रे प्रजातन्त्रं पल्लवितम् इति लोकैः दृश्यते, श्रूयते, समर्थ्यते च ।

वेदव्यासविरचितं महाभारतमपि वस्तुतः राष्ट्रियमहाकाव्यम् । अयं ग्रन्थः पञ्चमः वेद इव जनैः मन्यते । अस्य वैशिष्ट्यं व्यासस्य निम्नगर्वोक्त्या ध्वन्यते। यथा हि-

> ''धर्मे चार्थे च कामे च मोक्षे च भरतर्षभ ।
> यदिहास्ति तदन्यत्र यन्नेहास्ति न तत् क्वचित् ।।''

एवं भारतीयगौरवयुक्ते महाभारते महाकाव्ये राष्ट्रियचेतनाभावनायाः सर्वतोभावेनाभिव्यक्तिः दृश्यते । ग्रन्थेऽस्मिन् भीष्मपितामहेन राजनीतिः धर्मनीतिः, व्यवहारनीतिश्च प्रतिपादिताः, अथ च राजधर्मस्य महत्ता प्रकटिता ।

अस्माकं राष्ट्रियचरितस्य निर्माणे रामायणमहाभारतयोः योगदानम् अतीव महत्त्वपूर्णमस्ति । ग्रन्थस्यास्य परिशीलनेन समस्तं भारतवर्षं राष्ट्रियैकतायामाबद्धं प्रतिभाति । उपनिषद्ग्रन्थ इव महाभारतस्यैको महत्त्वपूर्णो भागः श्रीमद्भगवद्गीतानाम्ना विश्वविश्रुतः । गीतायाः

कर्मयोगः तथा च तत्र सदुक्तयः जगतः प्रेरणाप्रदायिका अपि च भारतीयराष्ट्रस्य धर्मनिरपेक्षनीतेः अनुकूलाश्च । अत एवास्य राष्ट्रियग्रन्थस्य गीताशास्त्रस्य प्रतिष्ठा विश्वस्मिन् सर्वतोमान्या श्लाघनीया च तिष्ठति ।

संस्कृतपुराण-साहित्येऽपि राष्ट्रियैकतायाः सर्वत्र प्रतिपादनं प्राप्यते। मत्स्यपुराणानुसारं कन्याकुमारीतः हिमालयं यावत् देशस्यास्याखण्डत्वं वर्णितम् । भारतवर्षस्य सीमानिर्धारणे विष्णुपुराणस्यायं श्लोकः अतीव महत्त्वपूर्णः अस्ति । चीन- भारतयोः सीमाविवादे अयं श्लोकः भूतपूर्वप्रधान मन्त्रिणा स्व0 पं0 जवाहरलाल नेहरू-महोदयेन प्रत्युपस्थापितः यथा-

''उत्तरं यत् समुद्रस्य हिमाद्रेश्चैव दक्षिणम् ।<br>
वर्षं तद् भारतं नाम भारती यत्र सन्ततिः ।।''

एतेन भारतवर्षस्याखण्डत्वं सम्यक् प्रतिपादितम् । पुराणग्रन्थेषु राष्ट्रियैकतायाः स्वरूपं विशदं वर्णितमस्ति । एवंभूतेषु पुराणग्रन्थेषु भारतभूमिः कर्मभूमिः मन्यते । तथा स्वर्गात् अपवर्गात् अपि अस्याः भूमेः श्रेष्ठता उद्बोध्यते । कर्मभूमिरियं भारतभूमिः देवानामपि स्पर्धायाः विषयः। विद्यावतां भागवते परीक्षा। तत्रापि सर्वत्र समग्र-राष्ट्रियतायाः पृष्ठभूमिः दरीदृश्यते । अस्माकं राष्ट्रियचेतनाभावनायाः स्पष्ट उद्घोष एवमस्ति -

''सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः ।<br>
सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग् भवेत् ।।''

भारतीयराष्ट्रियैकतायाः महती विशेषता अस्ति समस्त- मानवानां कृते मङ्गलकामना या नान्यत्र कुत्रापि दृष्टिपथमायाति। स्मृतिग्रन्थेष्वपि राष्ट्रियैकतायाः मातृभूमेः अखण्डतायाश्च प्रतिध्वनिः श्रूयते । आर्यावर्तस्य सीमानिर्धारणं कुर्वता श्रीमनुना मातृभूमेः अखण्डता प्रतिपादिता । वस्तुतः राष्ट्रियैकतायाः मूर्त्तरूपं तदुक्तौ प्रतिस्फुरति । यथा हि-

''आ समुद्रात् तु वै पूर्वादासमुद्रात्तु पश्चिमात् ।<br>
तयोरेवान्तरं गिर्योरार्यावर्त्तं विदुर्बुधाः ।।''<br>
''तं देवनिर्मितं देशं ब्रह्मावर्त्तं प्रचक्षते''

कथनेनानेन राष्ट्रियैकतायाः भौगोलिकं वर्णनं समीचीनं प्रतीयते । गुप्तसाम्राज्यकालेऽपि आचार्यचाणक्यस्य अर्थशास्त्रे राष्ट्रियचेतनायाः महद् गौरवमयं स्वरूपम् अवलोक्यते । तेनोक्तं यद् भारतीयाः कस्यामपि दशायां पारतन्त्र्यं न सहन्ते । आर्याः कदापि दासतां न स्वीकुर्वन्ति ।

अस्माकं संस्कृतसाहित्यं समस्तमानवतायाः बौद्धिकराजनीतिक-सांस्कृतिकाध्यात्मिकसामाजिकार्थिकादिसम्बन्धेषु ऐक्यानुभूति - चेतनाम् उद्बोधयति । एतादृशी चेतनैव राष्ट्रियतायाः वास्तविकं स्वरूपम् । सर्वहितैषिणी भावनास्माकं राष्ट्रियचेतनायाः महती विशेषता ।

संस्कृतसाहित्यस्य काव्यग्रन्थेष्वपि राष्ट्रियतायाः विशिष्टभावना वरीवर्ति। महाकविकालिदासभासप्रभृतीनां काव्ये नाटके चापि एतादृशी भावना जागर्ति । स्वप्नवासवदत्तायां यथा भासः कथयति-

"इमां सागरपर्यन्तां हिमवद्विन्ध्यकुण्डलाम् ।
महीमेकातपत्राङ्कां राजसिंहः प्रशास्तु नः ।।"

अत्र समस्ते भारते एकच्छत्रशासनस्य कामना राष्ट्रियैकताचेतना-मभिव्यनक्ति । अभिज्ञानशाकुन्तले नाटके कालिदासेनोक्तम्-प्रवर्त्ततां प्रकृतिहिताय पार्थिवः सरस्वती श्रुतिमहती महीयताम्। अत्र प्रजानां हिते सततप्रवृत्तिः समादरश्च राष्ट्रस्योत्थानाय परमावश्यक इति प्रतिपादितम्।

"सर्वस्तरतु दुर्गाणि, सर्वो भद्राणि पश्यतु ।
सर्वः कामानवाप्नोतु सर्वः सर्वत्र नन्दतु ।।"

इत्यत्रापि समस्तमानवतायाः मङ्गलकामना निहितास्ति । अपि च राष्ट्रस्य समुन्नतये अर्थवैभवस्य बुद्धिवैभवस्य च परस्परसमन्वयोऽपेक्षितः अर्थात् शासनं बुद्धिनियन्त्रितमेव राष्ट्रकल्याणाय प्रतिपद्यते । एतेनेदं सुस्पष्टं प्रतिभाति यत् महाकविः कालिदासः समग्रराष्ट्रियचेतनायाः हितचिन्तक आसीत् । संस्कृतसाहित्ये काव्यनाटकेष्वपि भारतीयराष्ट्रियतायाः जागरणस्य सन्देशः प्राप्यते । एवं कुमारसम्भवे, मेघदूते, रघुवंशादिमहाकाव्येऽपि राष्ट्रियतायाः प्राकृतरूपेण भारतभूमेर्मनोहारिणी शोभा वर्णिता । रघोः राज्ञो दिग्विजयवर्णने महाकविना विजयव्याजेन वृहत्तरभारतस्याखण्डसीमा निर्दिष्टा । राष्ट्रव्यापिन्या अखण्डैकतायाः कमनीया कल्पना प्रकटिता । निबन्धदैर्घ्यकारणात् संक्षेपेणेह प्रस्तूयते ।

संकेततः समस्तसंस्कृतसाहित्ये राष्ट्रियचेतनाभावनायाः देशभक्तेः भावनायाश्च सर्वत्र अभिव्यक्तिः दृश्यते । संस्कृतसाहित्यं संकीर्णां राष्ट्रियतां विहाय अन्ताराष्ट्रियताया उदात्तभावनामादाय समस्तमानवताया मङ्गलकामनां करोति इति नाविदितं प्रेक्षावतां विदुषाम्। भारते स्वदेशप्रेम्णः स्वदेशाभिमानस्य सामुदायिकराष्ट्रिय-चेतनायाश्च भावाभिव्यञ्जना संस्कृतसाहित्ये निरन्तरप्रवहणशीलास्ति।

प्राचीनसंस्कृतसाहित्येऽपि स्वतन्त्रभारतस्याभिव्यक्तिरस्ति । यत्रास्माकं देशस्य राष्ट्रियचेतना सुरक्षिता विद्यते । एतादृशी राष्ट्रियैकताचेतनायाः भावना नान्यत्र साहित्ये दृष्टिपथमायाति । विश्वस्य प्राचीनतमे ग्रन्थे ऋग्वेदे सर्वप्रथमं राष्ट्रस्य राष्ट्रशक्तेश्च वर्णनं द्रष्टवयम्। संस्कृतसाहित्ये प्रस्तुतेयं राष्ट्रियैकताया विश्वविश्रुता चेतनाभावना वस्तुतोऽनुकरणीया श्लाघ्या चास्ति ।

अतो राष्ट्रियचेतनायां संस्कृतस्य महत्त्वं सुरक्षितम् इत्यत्र न कश्चिद् विवादावसर इति ।

(अस्य विषयस्य विस्तृतविवेचनार्थं डॉ० हरिनारायण दीक्षितस्य 'संस्कृत साहित्य में राष्ट्रिय भावना' - शीर्षको ग्रन्थो द्रष्टव्यः । ग्रन्थोऽयं ' देववाणी-परिषद्, दिल्ली, आर ६ वाणी-विहार, नयी दिल्ली-११००५९' इत्यतः १९८२ तमेशवीयेऽब्दे प्रकाशितोऽभूत्।)

# पाठानां पाठनप्रकारस्य प्राचीन-भारतीय-मार्गः

पं0 अलखनिरञ्जन पाण्डेयः

पाठ्यविषयस्य पुष्टव्यावहारिकज्ञानोद्देश्येन तं सरलतया आकर्षक-रीत्या प्रभावोत्पादकरूपेण च बालानां हृदि स्थापयित्वा तेषां व्यक्तित्व-विकासे सहायताप्रदानम् एव अध्यापनस्य पद्धतेः मूलतत्त्वमस्ति । बालकस्य विचारधारणामननबोधन-प्रक्रियाम् अवलोक्यानुभवेन एव ज्ञानार्जनं, प्राप्तज्ञानस्य सततप्रयोगः, पूर्वार्जितज्ञानेन सह तद्योजनं तमादाय तर्क-वितर्कविवेचनमननमपि कुशलपाठनविधेः विशेषता भवति। ततः परं प्राप्तज्ञानानुसारम् आचरणं, सक्रियता, प्रयोगः, व्यवहारश्च सफल-पाठनविधेः अन्तिमोऽभिप्रायो भवति ।

उपर्युक्तम् आदर्शानुसारं सर्वत्रैव संसारे शिक्षाक्षेत्रे सर्वदैव शि-क्षाविशारदैः योग्यतमस्य ज्ञानप्रदानमार्गस्यानुसन्धानदिशि प्रयासः समाचरितः । आधुनिके युगे अस्यां दिशि हर्बार्टमहोदयानां पञ्चसोपानात्मकविधिः बहुजनप्रियः प्रतिभाति । प्रस्तावना-विषयप्रवेशात्मीकरण-तुलना-सिद्धान्तनिरूपणप्रयोगाः हर्बार्टमहोदयस्य कस्यापि विषयस्य अध्यापनार्थं पञ्च सोपानानि सन्ति । प्रस्तावनाद्वारा अनेन विधिना बालकस्य ध्यानं ज्ञातव्यविषयम् प्रति प्रवृत्तम् भवति । विषयप्रवेशावसरे सः ज्ञातव्यविषयस्य सूचनाम् प्राप्नोति । तदनन्तरं आत्मीकरणावसरे विविधविधप्रश्नोत्तरादीनाम् प्रयोगद्वारा विषयः हृदि प्रविशति । अर्जितज्ञानस्य ततः परं तुलनाया अवसरः । अत्र अर्जितज्ञानस्य समानज्ञानेन वा तुलनां विधाय बालस्य मनसि पुष्टीकरणं समाचर्यते । तदनन्तरं प्राप्तज्ञानस्य वास्तविकं रूपं स्पष्टरूपेण बालकस्य मनसि संस्थापयितुमवसरः । अस्य कृते विविधमार्गैः द्रढयितुं तस्यावृत्तिः समुचिता ।अनेन प्रकारेण दृढीभूतस्य अर्जितज्ञानस्य व्यावहारिकाभ्यासार्थं तं

नितान्तनिपुणं कर्तुं ज्ञानञ्च च स्थिरीकर्तुं अनेकमार्गद्वारा बालस्य स्वतंत्रलेखने भाषणे वा तदादाय नानाविधप्रयोगस्य योजना पञ्चमे सोपाने विधीयते। प्राचीनभारतीयशिक्षाविशारदैः अपि अस्यां दिशि मननं नूनमेव समाचेष्टितमस्ति । हर्बार्टमहोदय इव कामन्दकीनीतिशास्त्रकारः अपि शोभनतरं सप्तसोपानानां स्तुत्यां योजनां संस्थापयति। शुश्रूषाश्रवणग्रहणधारणोहापोहार्थविज्ञानानि अस्या निदेशकतत्त्वानि सन्ति। अयमस्ति प्रसंगगतश्लोकः-

"शुश्रूषा श्रवणञ्चैव ग्रहणं धारणं तथा ।
ऊहापोहार्थविज्ञानं तत्त्वज्ञानञ्च धीगुणाः।।"

पाठनस्य प्ररम्भे एव बालके श्रवणेच्छा (श्रोतुमिच्छा) समुत्पादनीया। अस्य कृते समुचितप्रकारेण बालकस्य मनः विषयं प्रति आकर्षणीयम् । अतः प्रथमसोपानस्य अध्यापनकृते शुश्रूषा श्रवणेच्छायाः प्ररोह एव । तदनन्तरं एतादृशस्य विधेः व्यवहारो विधेयः येन बालः सम्यक् अध्यापकेन स्थापितस्य विषयस्य श्रवणं करोतु । तस्य मनः पाठ्यविषयोपरि केन्द्रीभूतम् भवतु ।

पाठ्यविषयस्य सम्पूर्णमनसा अध्यापकमुखेन, सहपाठिमुखेन, स्वीयमुखेन श्रवणं कृत्वा बालकः शास्त्रज्ञानग्रहणे समर्थो भवति। अतः तृतीयेऽस्मिन् सोपाने शास्त्रग्रहणस्यैवोद्देश्यम् अस्ति। अतः परं धारणस्य सोपानं प्रचलति। अत्र विविधोपायैः यतनीयं यतो हि श्रुतज्ञानस्य सम्यग् मनसि धारणं भवेत्। मनसि ज्ञाने सञ्जाते तस्य स्मृतौ दृढं स्थानम् भवति परन्तु धारणाया पुष्टीकरणार्थमिदमावश्यकमस्ति यत् ज्ञानं बहुप्रकारेण प्रश्नोत्तरविचारविमर्शभाषणवादविवादैः सम्यग् आलोडितं स्यात् । अस्य कृते ऊहापोहस्य सोपानमागच्छति। अस्मिन् सोपाने तर्कवितर्कप्रश्नोत्तर-वादविवादादिभिः ज्ञानस्य विश्लेषणं तस्य मन्थनञ्च प्रचलति। अनेन ज्ञानस्य आलोडने सञ्जाते तस्य विशिष्टावस्थायां मनसि स्थापनस्य अवसरः समायाति। अस्यामवस्थायां संक्षेपकथन-भाषणप्रश्नोत्तरादि- मार्गैः प्राप्त-ज्ञानस्य विशिष्टबोधः मनसि प्रगाढं प्रविशति, ज्ञानमपि भृशं दृढतरं सन्तिष्ठते । ज्ञाने पुष्टे दृढे जाते तस्य गूढार्थस्य ज्ञानम् आवश्यकम् भवति। "वादे वादे जायते तत्त्वबोधः" इति न्यायेन ऊहापोहसोपानद्वारा

विशिष्टार्थबोधे कृते विविधविधव्यवहारेण गूढार्थपरिज्ञानस्य सोपानम् आगच्छति । इदमेवास्ति वास्तविकं स्वरूपमादर्शभारतीयाध्यापनपद्धतेः । अस्यां पद्धतौ उपरिकथिता हर्बार्टमहोदयस्य पञ्चसोपानात्मिका पद्धतिः सुष्ठुतरविस्तरेण शोभनेन च मार्गेण समाविष्टा भवति । भारतीय-शिक्षाशास्त्रे वाचस्पतिमिश्राणामपि पाठनप्रणाल्यां सोपानविधेः वैशिष्ट्यमस्ति । दर्शनशास्त्रस्य हृदयस्थिरीकरणाय वाचस्पतिमिश्रमहोदयाः पञ्चसोपानानाम् एव निदेशनं समाचारन्ति । अस्य महोदयस्य अध्यापनविधेः इमानि पञ्च सोपानानि सन्ति :-

१. अध्ययनम् (शब्दश्रवणद्वारा मननार्थं चित्तस्यैकाग्रता)

२. शब्दः (शब्दानां मर्मज्ञानद्वारा तेषां वास्तविकार्थज्ञानम्)

३. ऊहापोहः (तर्कद्वाराऽर्थस्य तज्जन्यज्ञानस्य च यथार्थरूपस्य बोधः । अयोग्यतत्त्वानां दूरीकरणम्)

४. सुहृत्प्राप्तिः (ज्ञानस्य पुष्टीकरणार्थं शास्त्रार्थ-वाद-विवादादिद्वारा मित्रैः गुरुभिश्च अर्जितज्ञानस्य संशोधनं समर्थनञ्च)

५. दानम् (अध्यापनभाषणप्रवचनलेखादिव्यावहारिकरीतिभिः ज्ञानस्य उपयोगः तस्य अभिवृद्धिश्च)

कौटलीयशास्त्रेऽपि विषयस्य अध्यापनाथर्म् ईदृशानां तत्त्वानाम् उल्लेखः दृश्यते ''शुश्रूषाश्रवणग्रहण-धारणाविज्ञानोहापोह-तत्त्वाभिनिविष्टबुद्धिं विद्या विनयति नेतरम्'' ।

इमानि सर्वाणि कामन्दकीकारस्य अनुरूपाणि एव सन्ति । कौटलीयार्थशास्त्रस्य एभिर्वचनैः स्पष्टमेव प्रतीयते यत् यावत्कालपर्यन्तं अध्यापनक्रमे एतेषां तत्त्वानामुपयोगो न भविष्यति तावत्कालपर्यन्तम् अल्पवयस्कानां अध्यापनस्य उपयोगः नैव सफलीभवितुमर्हति ।

पाश्चात्त्यडीवीमहोदयानामाविष्कृतमार्गः कामन्दकीकारस्य, कौटलीयार्थशास्त्रस्य च तुलनाम् अधिरोहति । डीवीमहोदयः स्वीयपुस्तके ''हाउ वी थिंक'' (वयं कथं विचारं कुर्मः) इत्यत्र''सोपानत्रयाणां चर्चां करोति- १. प्राब्लम ऐण्ड साल्यूशन (समस्या तस्या उत्तरञ्च) २.सजेस्टेड साल्यूशन्स एण्ड सेलेक्शन आफ़ ए साल्यूशनः(विविधेषु उत्तरेषु एकस्य यथोचितस्य निर्धारणम्) ३.- ऐक्शन - (ज्ञानानुसारं क्रिया)

उपर्युक्ताधुनिकप्राचीनपाश्चात्त्यप्राच्ययोः मार्गयोश्च अध्यापने कामन्दकीकारस्य सप्तसोपानानाम् उपयोगः युक्तः शोभनश्च प्रतीयते । सर्वप्रथमं विषयं प्रति श्रोतुमिच्छा समुत्पादनीया यतो हि कस्यापि विषयस्य अध्यापने बालकस्य मनः सर्वविधगृहपाठशालाराजमार्गादिजन्य-बाह्यवातावरणस्य प्रभावेण मुक्तं भूत्वा पाठ्यविषये केन्द्रितं भवेत् अतः परं विषयस्य श्रवणम् अनिवार्यम् भवति । श्रावणं, स्वकीयपठनात्, छात्राणाम् पठनात्, आधुनिककाले श्रव्यदृश्यप्रभावकसाधनैः छात्राणाम् ज्ञानार्जनबुद्धिजागरणम् । ततः परं ज्ञानार्जनार्थं तस्यावगमः परमावश्यकः। अस्य कृते विस्तृता व्याख्या, प्रश्नोत्तराणि अन्ये च मार्गाः उपरि प्रदर्शिताश्च। एवं कृते तर्कवितर्कादिमार्गैः अर्जितं ज्ञानं मनसि पुष्टम् भवति, स्थैर्यञ्च आप्नोति । एभिः मार्गैः पाठनम् विधाय ज्ञानस्य मर्मप्रकाशनम्, विषयावृत्तिः श्रेयस्करी भवति । एवं कृते ज्ञानं बालकस्य वशे एव स्थास्यति। अन्ते मर्मज्ञानार्थम् अनुभवस्य आवश्यकता भवति । अयमेवानुभवः बालकस्य व्यक्तित्व-विकासे भृशम् उपकरोति । तेन नवनवानां तत्त्वानामनुसन्धाने च सः सुतरां प्रभवति ।

इति शम् ।

# भारतीय भाषाओं का उपजीव्यः संस्कृत

डॉ0 भगवतीलाल राजपुरोहित

संस्कृत भारत की प्राचीन भाषाओं में से एक है । भारतीय वाङ्मय का पुरातन विपुल भण्डार इसी भाषा में प्राप्त होता है । वैदिक साहित्य, स्तुति साहित्य, पुराण, काव्य, नाटक, आयुर्वेद, ज्यौतिष, गणित, ज्ञान-विज्ञान आदि इसमें वह सब कुछ है जो भारत में है । पालि और प्राकृत, अपभ्रंश और अवहट्ट के साथ ही आज की समस्त भारतीय भाषाओं को रूप और रस इसी भाषा से और इसमें रचित वाङ्मय में प्राप्त होता है ।

परवर्ती समस्त भाषाओं के रूप बदलते रहे और पल प्रति पल बदल रहे हैं । परन्तु संस्कृत के रूप में तब से अब तक कोई परिवर्तन नहीं हुआ है । यह कारण है कि हम प्राचीन वाङ्मय को उसी रूप में समझ सकते हैं । इस भाषा की अन्तःशक्ति इतनी समृद्ध और सारवती है कि भाषागत कोई भी झंझावात उसका कभी कुछ भी नहीं बिगाड़ सका है। यही नहीं, सहृदय विभाषियों को भी इसने अपने रंग में रचा लिया । संस्कृत पुराणी नवीना है । यह प्राचीन से प्राचीन है । यह नवीन से भी नवीन है । इसकी भाषा व्याकरणगत वैशिष्ट्य के कारण इतनी समर्थ और नवीन संभावनाओं से युक्त है कि सरलता से नूतन अर्थ से सम्पन्न कोई भी शब्द निर्मित किया जा सकता है । यदि हमें नयी वैज्ञानिक शब्दावली की अपेक्षा होती है तो हमारी दृष्टि संस्कृत की ओर जाती है। नूतन ज्ञानविज्ञान की भाषागत आकांक्षाओं की पूर्ति भी वही करती है । आज भारत की समस्त भाषाएँ नये संसार की विचारवाहिकाएँ बन रही हैं । यदि विदेशी भाषाओं की उपेक्षा कर भारतीय भाषा में ही अपनी बात कहनी हो तो हर देशी भाषा को संस्कृत का ही आश्रय लेना पड़ता है । इस प्रकार समस्त पारिभाषिक शब्द संस्कृत मूलक होते जा रहे हैं। यानी जो शब्द हिन्दी में प्रयुक्त होता है वही तेलुगु, तमिल, मलयालम और बँगला व पंजाबी में प्रयुक्त हो रहा है । इस प्रकार संस्कृत पूरे देश को भाषागत स्तर पर आपस में एक सूत्र में बाँधने का एकमात्र समर्थ माध्यम है ।

भारत की हर भाषा संस्कृतमूलक है । आर्य भाषा और द्रविड भाषा परिवार के माध्यम से यूरोपीय विद्वानों ने देश के मन में खाई डालने का प्रयास किया है पर अब विद्वानों के विशिष्ट अध्ययन ने यह सिद्ध कर दिया है कि भाषा के क्षेत्र में उत्तर और दक्षिण का कोई भेद नहीं है और दक्षिण भारतीय भाषाओं की जननी भी

संस्कृत ही है । तमिल प्राचीन काल से ही संस्कृत से विकृत होती गई और नया रूप प्राप्त करती गयी अतः वह कुछ अधिक भिन्न दिखाई देती है । यही नहीं, भाषाओं के तुलनात्मक अध्ययन से यह भी सिद्ध हो गया है कि पूरे देश की लोक भाषाएँ संस्कृत से रूपान्तरित होकर आज के रूप तक पहुँची हैं । और आज का लोक भी संस्कृत के अधिक निकट है । उदाहरण के लिए तेलुगु और मालवी की समता संस्कृत के परिप्रेक्ष्य में इन कुछ शब्दों से पायी जा सकती हैं :

| संस्कृत | तेलुगु | मालवी |
|---|---|---|
| सुवासिनी | सुबासिनी | सुवासण |
| शून्य | सुन्ना | सुन्न |
| यज्ञोपवीत | जन्देमु | जनोई |
| कुक्कुर | कुक्क | कुतरो |
| वापी | वावी | बावड़ी |
| कर्करा | कंकर | कांकरो |
| वेग | बेगि | वेगि |
| सन्ध्या | संजा | संजा।सांज |
| उपवास | उपास | उपास |
| राज्ञी | राणी | राणी |

तमिल की प्राचीन गोलाकार लिपि वुण्ट कहलाती थी । ईसवी पूर्व तीसरी सदी का यह शब्द वृत्त का तद्‌भव है । इसी प्रकार कितनी ही समानताएँ प्राप्त होती हैं।

यह तो सिद्ध ही हो चुका है कि वैदिक गणित सूत्र आधुनिक जटिल गणित की गुत्थियाँ सरलता से सुलझाने में समर्थ है और वैज्ञानिकों ने यह भी घोषित किया है कि कम्प्यूटर के लिए सब से उपयुक्त भाषा संस्कृत है पर उसकी जटिलता को लेकर ढिंढोरा पीटा जाता है । कोई भी भाषा सीखने में परिश्रम तो करना ही पड़ता है । जितना परिश्रम हम अंग्रेजी सीखने में करते हैं उतना ही परिश्रम यदि संस्कृत सीखने में करें तो कोई कारण नहीं कि हम उतने ही समय में संस्कृत में भी दक्षता प्राप्त न कर लें। और लोग प्राप्त करते भी हैं । यह भी कहा जाता है कि उसमें रटना पड़ता है। क्या बिना सूत्र रटे विज्ञान की किसी भी शाखा में भी दक्षता अर्जित की जा सकती है ? अब किसी भाषा को सीखने के लिए इतना श्रम तो करना ही पड़ेगा। परोसी थाली में भोजन मिल सकता है, भाषा नहीं। पर एक बार इस भाषा में गति हो जाने पर हमारे पारंपरिक ज्ञान विज्ञानों के द्वार एक साथ खुल जाते हैं। और वह पछतावा भी नहीं रहता जो समय बीतने पर बहुधा लोगों को होता है। हम भी संस्कृत जानते तो भाषाओं की प्रवृत्ति समझने में हमारी गति होती और वेद, उपनिषद्, पुराण, दर्शन, विविधशास्त्र और पुराशास्त्र को जान पाते, साहित्य में भी

हमारी गति होती। भाषा में झंकार लाने की जो क्षमता संस्कृत में है वह किसी और भाषा में खोजने पर भी नहीं मिलेगी!

कुछ लोगों का कहना है कि संस्कृत तो मृत भाषा है पर वास्तव में वह मृत नहीं अमृत भाषा है। क्योंकि वह स्वयं तो अजर अमर है ही, उसका पान करने वाली हर भाषा अमृतत्व तथा वामन से विराटत्व के क्षितिज को छूने लगती है। संस्कृत न केवल हमारी धार्मिक भाषा है अपितु हमारे सांस्कृतिक विचारों की भाषा भी है राष्ट्र के संविधान में देश की विभिन्न भाषाओं में संस्कृत की भी प्रतिष्ठा है। वह किसी प्रदेश की नहीं अपितु पूरे राष्ट्र की भाषा है। लोक कल्याण यानि निर्माण, विश्व प्रेम, कलात्मक संस्कृति एवं अध्यात्म जीवन का एकत्र पंचायतनी देव मंदिर संस्कृत है। संस्कृत से हमारी भाषाएँ बनी हैं, हमारे विचार बने हैं, हमारे भारत का स्वरूप बना है। हमारी भाषा में पचहत्तर प्रतिशत तो संस्कृत ही है। संस्कृत को क्लिष्ट कहना बुद्धि का आलस्य है। अपनी संस्कृति और देश की एकसूत्रता के लिए इस आलस्य को त्यागना होगा।

# कालिदासस्य कलावैशिष्ट्यम्

प्रो0 ई0 पी0 भरतपिषारटिः

कला नाम जीवितस्य प्रतिबिम्बिनमेव । तस्य भावो रूपमिति द्वावंशौ स्तः । आविष्करणीय आशयो वस्तु वा भाव इति पदेन अत्र विवक्षितम्। तदाविष्करणार्थं यद् माध्यमं स्वीक्रियते तदेव रूपम् । एतदंशद्वयं विना कलासृष्टिः न सिद्ध्यति । कलायाः अन्यः कश्चन विभागोऽप्यस्ति । स एव सहृदयः । कलाकारसहृदययोः समाहार एव कलाप्रपञ्चः किन्तु एतयोः सहृदयकलाकारयोः परस्परं किञ्चिदन्तरमस्ति । परविकारसात्मीकरणशक्तिः, संवेदनक्षमता इत्येते द्वे अपि एतयोः समाने एव । किन्तु सर्वप्रधाना नैसर्गिकी प्रतिभा, तस्याः प्रतिभायाः समुत्पन्ना अनूभूतिविशेषाः, तान् यथोचितं संस्कृत्य रूपाधाने पर्याप्ता शक्तिः, तदाविष्करणार्थमनुरूपाणां माध्यमानामक्लिष्टप्रयोगः इत्येते कलाकारस्य अनिवार्याः सविशेषगुणा एव ।

कलायाः सामान्यलक्षणमेवात्र उपन्यस्तम् । कलास्वन्यतमं साहित्यं कलाकुटुम्बे विविधैर्विशेषैः प्राधान्यमावहति । गीतचित्रनृत्याभिनयशिल्पादयः साहित्यस्य सहोदराः परिगण्यन्ते । कला यदि किञ्चन राष्ट्रमुद्भाव्यते तर्हि तस्य अन्यतमः प्रान्तः एव साहित्यम् । स्वानुभूतिमाविष्कर्तुं शब्दात्मकं माध्यमं यः स्वीकरोति स साहित्यकारः इति व्यपदिश्यते । स्वानुभूतिं यदि नादलयात्मकमाध्यमेन आविष्करोति स गायकः । अङ्गचलनात्मक-माध्यमेन यदि अनुभूतिमाविष्करोति तर्हि स नर्तकः । रेखामाध्यमेन अविष्करोतिं तर्हि स चित्रकारः । शिलादारुरूप-माध्यमेन चेत् स शिल्पी भवति । अयमेव विशेषः ।

एतेषु साहित्यकलाया एव प्राधान्यमस्ति । नादलयात्मिकायां गानकलायां भाषा अप्रधानमेव । अतः सम्भवद्वारा विकारसंवेदनं तस्मिन् असाध्यमेव । शिल्पचित्राभिनयेषु त्रिषु प्रान्तीयभेदो नास्ति । तेषां देशकालातीतः प्रचारः सम्भवति च । तथापि तेषां जीविताविष्करणविषये बहूनि पारतन्त्र्याणि सन्ति । अतः तेषां प्रसारः सर्वथा सीमितश्च ।

साहित्यस्य तु भाषा-परतन्त्रतायाः सत्त्वेऽपि जीवितस्य कालत्रयव्यापकम् आन्तरं बाह्यं च सकलमपि स्पन्दनं यथेष्टं चित्रीकर्तुं तथा सहृदयान् कमपि अद्भुतमयं भावनालोकमानीय स्वच्छन्दविहरणार्थं च स्वातन्त्र्यं साहित्यकलाया एव स्वायत्तम् । न खलु अन्यासां कलानां विद्यते ।

अस्य लघुविवरणस्य भूमिकया सह कालिदासकाव्यानां मूल्यानि निर्णेतुं मया अयमवसरो विनियोज्यते । न केवलं कालिदासः भावनाप्रधानः कवि किन्तु प्राणिसाकल्यस्य अधित्यकायाः प्रभृति उपत्यकापर्यन्तम् अन्तर्बहिश्च सम्यक् ज्ञानमुपलब्धवान् कश्चन महात्मा चेति वक्तुं शक्यते। अत एव स महाकविरिति प्रथितोऽभूत् ।

महत्त्वं कवित्वं च विभिन्ने स्तः । समाजस्य समाकर्षणक्षमां कामप्यनुभूतिं सरलैः सरसैश्च पदैः छन्दोनिबद्धतया आविष्कर्तुं येषां शक्तिरस्ति ते कवयः परिगण्यन्ते । इयं शक्तिस्तु विलक्षणैव इति सत्यमेव। किन्तु ततोऽप्युन्नतं पदं महत्त्वस्य अस्ति । समाजस्य सांस्कारिकोद्बोधन-प्रवणा वाचः तेषामेवायत्ताः । क्रिस्तुदेवस्य श्रीरामकृष्णपरमहंसस्य च वचनानि नैव छन्दोनिबद्धानि; साहित्यसाधारणाः गुणविशेषाश्च तेषां न सन्ति । तथापि -

''मधुमधुरैरतिरुचिरै-
र्मसृणैर्मधुपव्रताकुलैः कुसुमैः ।
लसतीयं सुमवनिका
कलकलकलिता समन्ततो वयसाम् ।।''

इत्येवं काव्यभङ्गीतरङ्गितात् पद्यादपि अधिकं चैतन्यं प्रसरणशक्तिश्च तेषां प्रवचनानां स्तः । कुत एतत् ? उच्यते । कवित्वादपि अतितरां अमूल्यमेव महत्त्वम् । कवित्वं महत्त्वं चेत्येतद्द्वयं यस्मिन् क्षीरनीरन्यायेन सम्मिलति स एव महाकविः भवति, न कदापि तादृशाः बहुषु सर्गेषु आलङ्कारिकलक्षणोपबृंहितानां सहस्रसंख्याकानां पद्यानां गुम्फनेन । अत एव कालिदासनामश्रवणे यादृश आदरः अस्माकं मनसि समुत्पद्यते तादृश आदरः माघश्रीहर्षादीनां नामश्रवणे सहृदयहृदये नोत्पद्यते ।

कालिदासः आलङ्कारिकलक्षणानां विधेयीभूत्वा न कदापि स्वकाव्यानि रचितवान् । माघनैषधादिषु सा विधेयता आनखशिखं द्रष्टुं शक्यते ।

काव्यानाम् आत्मभूतं भावं साकल्यतः विस्मृत्य साधितं रूपाधानं तेषां रचनासु साधारणमेव । तत्त्वतः उत्सवावसरेषु अग्निप्रयोग (Fire works) इव किमपि अद्भुतमुत्पादयितुमेव तेषां कृतयः पर्याप्ताः। मानसं अस्पृष्ट्वा उच्चैस्तरम् उद्घुष्यमाणं भगवन्नामकीर्तनमिव सर्वत्र कमपि कोलाहलं ताः उत्पादयन्ति प्रतिपाद्यविषयस्य चित्रं सहृदयहृदये आलेखितुम् अथवा वैकारिकमुद्दीपनं शुद्धीकरणं वा साधयितुं ताः न पारयन्ति । "नगरार्णवशैलर्तु" वर्णने निष्णातः कविः कथाधारायाः अविच्छेदात् सम्पद्यमानां रसानुभूतिं कथं जनयितुं शक्तो भविष्यति । केशादिपादवर्णनार्थं जलकमलादीनां मार्गणे श्रद्दधानः कविः वर्णनीयपात्राणां स्वरूपं सहृदयहृदये उन्मीलयितुं कथं शक्तः स्यात् । कालिदासेन स्वकीयकथापात्राणां चित्रं केशादिपादवर्णनया नालिखितम् । कुमारसम्भवे पार्वत्याः पादादिकेशवर्णनं परिमितैः पद्यैः कृतमित्येतत् सत्यमेव । "अभ्युन्नताङ्गुष्ठनखप्रभाभिः" इत्यारभ्य "लज्जा तिरश्चां यदि चेतसि स्यात् "इत्येतत्पर्यन्तं षोडशैः पद्यैः आलङ्कारिकसङ्कलितात् सर्वोपमाद्रव्यसमुच्चयात् समुद्भूतानामपि तेषां किमपि विलक्षणं चैतन्यं उद्दीपयता तेन कविना पार्वत्याः तत्तदवयवानां वैशिष्ट्यम् अचुम्बितया रीत्या वर्णितमास्ते । तथापि कौमारदशातः यौवनाभिमुखं उत्प्लवमानायाः पार्वत्या आकारचारुतायाः तेन प्रत्यङ्गवर्णनेन साकल्यतया अभिव्यक्तिः न जायते, तदर्थं सिद्धहस्तस्य तस्य कवेः जलदकमलमधुमधुपादीनाम् अनुधावनस्य आवश्यकता नास्ति । अचुम्बितपदप्रयोगेन स महाकविः तमर्थं साधयति ।

> "उन्मीलितं तूलिकयेव चित्रं
> सूर्यांशुभिर्भिन्नमिवारविन्दम् ।
> बभूव तस्याश्चतुरस्रशोभि
> वपुर्विभक्तं नवयौवनेन ।। "

अत्र चतुरस्रशोभि वभुः नवयौवनेन विभक्तम् इत्येतत्प्रयोगात् महाकवेः सिद्धहस्तता सुव्यक्तैव । तस्याः यौवनस्य पूर्णता झटित्येव वैद्युतदीप इव प्रत्यक्षीभवति । पूर्वार्धे दृश्यमानमुपमाद्वयं तस्य सौभगम् आपादयतीत्येव । तथैव कुमारसम्भवे तृतीये सर्गे -

"तस्मिन् वने संयमिनां मुनीनां
तपःसमाधेः प्रतिकूलवर्ती ।
सङ्कल्पयोनेरभिमानभूत-
मात्मानमादाय मधुर्जजृम्भे ॥"

इत्यादि पञ्चदशपद्यैः निष्कम्पवृक्षं निभृतद्विरेफं, मूकाण्डजं शान्तमृगप्रचारं तत्तपोवनं रतिद्वितीये मदने प्रपन्ने सति कथं विकार-विजृम्भितमासीदित्येतद् वर्ण्यते । अष्टमे सर्गे पार्वतीपरमेश्वरयोः सम्भोगशृङ्गारवर्णनादधिकं, किं बहुना,

"कि शीतलैः क्लमविनोदिभिरार्द्रवातान्
संचालयामि नलिनीदलतालवृन्तैः ।
अङ्के निधाय करभोरु यथासुखं ते
सम्वाहयामि चरणावुत पद्मताम्रौ ॥ "

इत्यादि शाकुन्तले दृश्यमानात् शृङ्गारवर्णनादप्यधिकं भावोद्दीपकं हृद्यं च तपोवनवन्यमृगाणां शृङ्गारवर्णनमनुभूयते । कुमारसम्भवे दृश्यमानं तिर्यक्शृङ्गारवर्णनं

"एकत्रैवानुरागश्चेत् तिर्यङ्म्लेच्छगतोऽपि वा।
योषितो बहुशक्तिश्चेत् रसाभासस्त्रिधा मतः॥"

इत्याद्यालङ्कारिकप्रमाणमनुसृत्य शृङ्गारः रसाभासः किल । को नामास्य तादृक्पतितत्वकल्पने मानदण्डः । तदभावे तदप्रतीतिरेव आभासः खलु । अत्र रतेः असत्त्वे सत्त्वप्रतीतिरस्तीत्येव विवक्षितम् । कथमेतत्, आस्वादकाः किं केवलं मृत्पिण्डमस्तिष्काः ? तिर्यग्गतः तादृशो रतिभावः न किं संवेदनक्षमो भवति, ईदृशं हृदयाकर्षकं भावाविष्करणं कालिदासस्य कृतिषु अन्यत्र कुत्रापि न दृश्यते । तादृशो भावः कथमाभासो भविष्यति?

म्लेच्छगताः रसभावाः रसाभासा भवन्ति किल । त्रिपुरसुन्दरचन्द्रचक्रवर्तिनः त्रिदिवचन्दनचन्द्रिकादेव्याश्च परस्पररतिरेव आलङ्कारिकदृष्टौ रसो भविष्यति किल । "चक्की" "चक्करं" च परस्परं को नाम भावः संयोजयति । न सा रतिः किम् ? किं नाम प्रेरकं नीग्रोयुवमिथुनानां परस्परसंयोजने ? सापि किं न रतिः ? ते सर्वेऽपि म्लेच्छाः, अतः तेषां नैव रतिः किन्तु रत्याभास एव इति प्रामाणिकानां

विधिः विविधानां विचित्राणां च वर्ण्यवस्तूनाम् अन्तःप्रवेष्टुं तैः सह तन्मयीभवितुं सहृदयहृदयेषु तत् संक्रामयितुं कालिदास इव आलङ्कारिकदृष्ट्या सलक्षणो न कोऽपि कविः शक्तोऽभवत् ।

आलङ्कारिकप्रमाणविधातृषु बहवोऽपि समाजस्य उन्नतपदानामाराधकाः । तेषां प्रतापः मदनतापश्चैव तेषां प्रामाणिकानां प्रतिपाद्यस्य केन्द्रबिन्दुः । सामान्यजना तेषां दृष्टिषु न किञ्चिदप्यस्ति । कस्यचित् प्रामाणिकस्य साहित्यसमीक्षकस्य अभिप्रायोऽयं श्रूयताम्

''यावत् समाजः सम्पन्नो भवति तावत् कला सम्पन्ना सम्पद्यते । यदा समाजः क्षीणो भवति तदा कलापि क्षीणा परिणमति ।''

विश्वोत्तररचनास्वेकापि एतेनाभिप्रायेण न संयुज्यते । सहानुभूतेः उत्पन्नो मानसिकशोकः अथवा स्वानुभूतेरुत्पन्नं मानसिकमथनमेव उत्कृष्टकाव्यरचनानां बीजम् । अनाथतां गतायाः अविरतमश्रुधारयाभिषिक्तायाः सीतायाः सन्ततसाहचर्यमेव आदिकाव्यस्य बीजम् । वाल्मीकेः हृदये प्रमृद्यमानायाः अनुभूतेः सेतुभञ्जने हेतुरभूत् क्रौञ्चवध इत्येव । भवभूतेः विश्वोत्तरदृश्यकाव्यानि अवज्ञात एव रूपं प्रापुः । तस्य कवेः नाटकस्य प्रस्तावनायाः एतद् व्यक्तमेव । विक्टर यूगो-महाशयस्य महाख्यायिका, रवीन्द्रनाथमहाकवेः गीताञ्जलिः इत्यादयो विश्वोत्तरकृतयः सर्वा अपि यातनाया एव समुत्पन्नाः । स्वकीयसदस्यानां कवीनां कृते विक्रमादित्यमहाराजेन निर्मिते राजोचिते अट्टालके अतिसुन्दरचन्दन-पर्यङ्के क्षौमशय्यायाम् उपविश्य राजधानीपरिचारिकाणां चामरमन्दमारुतपरमानन्दमनुभूय प्रतिघण्टं कवोष्णदुग्धं पायं पायं न लिखितवान् कालिदासो रघुवंशम्, प्रत्युत भारते आसेतुहिमाचलं पादचरं चरित्वा, बुभुक्षां पिपासां च विषह्य, विविधान् क्लेशान् अनुभूय, विविधैः संस्कारैस्सह मिलित्वा समाहृताभ्यो विविधानुभूतिभ्य एव तस्य महाकवेः काव्यानि जनिमलभन्त । सुखानुभूतेः तथा साम्पदिकभद्रताया वा न किमपि विश्वोत्तरं काव्यं संजातम् । प्रत्युत सहृदयत्वं गुणीकृत्य केवलमस्तिष्कव्यायाममात्रफलानि शास्त्राणि शास्त्रसहोदराः कलासृष्टयश्च सुखसमृद्धजीवितात् प्रभूतं जनिमलभन्त। मेलपत्तूर नारायणभट्टपाद एव अस्य सुव्यक्तमुदाहरणम् । अतिदुस्सहात् वातरोगपीडनादेव अतिसुन्दरं

नारायणीयस्तोत्रकाव्यमुदयं लेभे । अम्बलपुषामहाराजस्य विद्वत्सदसि राजपण्डितपदलाभानन्तरं तेन विलिखितं प्रक्रियासर्वस्वं धातुकाव्यं च नारायणीयस्य सहस्रांशं प्रचारम् इतः पर्यन्तं नालभेताम् ।

कालिदासः आलङ्कारिकसङ्केतानां विधेयो नासीदिति तस्य कृतय एव स्पष्टीकुर्वन्ति । समाजस्य धार्मिकोन्नमनार्थं पर्याप्तं कथावस्तु, वर्ण्यवस्तुनः मर्मनिर्धारणशक्तिः, तदनुरूपरूपाधानवैदग्ध्यं, सहृदयसंवेदनक्षमं कृत्वा स्फटिकस्फुटायां भाषायामाविष्कर्तुमावश्यकी सिद्धहस्तता, एतेषां सम्मेलने सत्येव उत्कृष्टं काव्यं जनिं लभते । कालिदासस्य अलङ्कारशास्त्रमत्र पर्यवस्यति । भावनानामनियन्त्रितस्य अनौचित्यजटिलस्य उत्प्लवनस्य विधेयो भूत्वा कथाधारायाः एकाग्रतां शिथिलीकर्तुं तद्द्वारा अनुस्यूतरसास्वादस्य विघातं कर्तुं च पर्याप्तः माघश्रीहर्षादीनां वर्णनावेशः कालिदासकाव्येषु न दृश्यते । ईश्वराराधनपरेषु उत्सवादिषु वर्णशबलताशब्दकोलाहलानामेव अधुना प्राधान्यं कल्पते खलु । आराधनाभूतं लक्ष्यमप्रधानीकृत्य शब्दवर्णकोलाहलार्थमग्निक्रीडन- (fire works) प्रकटनैः धनस्य दुर्व्ययीकरणमिव महाकाव्यरचनाभिमानिनः कवयः भावनां दुर्व्ययीकुर्वन्ति । इमामनुचितां निरर्थकतां स्तोतुं प्रणन्तुं च केचन बुद्धिव्यापारिणश्च परितः जीवन्ति । तेषां शिरश्चालनमनुसृत्य शिरश्चालयन्तः सामान्यजनाश्च तेषां प्रोत्साहने बद्धकङ्कणाभरणाधिवासाश्च । कलासाकल्यस्य निर्जीवतापादने किमतः परम् आवश्यकमस्ति । महाकवेः कालिदासस्य काव्यरचनायाः स्वभाववैशिष्ट्यमधिकृत्य एतावत् प्रस्ताव्य तस्य कृतीरवलम्ब्य किञ्चित् विहगवीक्षणं कर्तुम् अत्रोद्यमः क्रियते ।

कालिदासस्य कालमधिकृत्य गवेषकाः अद्यापि विवादकलुषा दृश्यन्ते। क्रिस्तोः पूर्वं चतुर्थशतकस्य तथा क्रिस्तोः पश्चात् अष्टमशतकस्य च मध्ये विद्यमानेषु शतकेषु अस्माकं महाकविं विभिन्नाभिप्रायाः गवेषकाः ऊर्ध्वमधश्च बलादाकर्षन्ति । केचन महाकवेः पादं गृहीत्वा अधस्तात् आकर्षन्ति अन्ये केचन शिखां गृहीत्वा क्रिस्तोः पश्चात्तनशतकाभिमुखं ऊर्ध्वमाकर्षन्ति । एवमधुनापि स कविकुलगुरुः गवेषकानाम् आकर्षणेन परिक्लिष्टः वैतसीं वृत्तिमवलम्बमानो वर्तते हा. धिक् ! हा धिक् !

लोकपरिचयः, जीवितेन सह विलयं प्राप्तः सौन्दर्यबोधः, आविष्करणे विद्यमाना अकृत्रिमता इत्येते कालिदासस्य काव्यानां विलक्षणलक्षणानीति संक्षेपतोऽत्र निर्दिश्यते ।

कालिदासकृतयः आहत्य षडेव सन्ति । मेघसन्देशः, कुमारसम्भवं, रघुवंशम् इति त्रीणि श्रव्यकाव्यानि, मालविकाग्निमित्रं, विक्रमोर्वशीयं, शाकुन्तलम् इति त्रीणि दृश्यकाव्यानि च । ऋतुसंहारः कालिदासीय इत्यभिप्रायः न स्वीकरणीय इति मे प्रतिभाति । यतः महाकवेः इतरकाव्येषु अदृश्यमानानि रचनावैकल्यानि ऋतुसंहारे सुलभं दृश्यन्ते । अत्रोदाह्रियते-

इन्द्रवज्रा, उपेन्द्रवज्रा, वसन्ततिलकं, अनुष्टुप् इत्येतैः छन्दोभिर्विना अन्येषां छन्दसां विषमपादानां अन्त्याक्षराणि कालिदासस्य अन्यासु कृतिषु गुरूण्येव दृश्यन्ते । ऋतुसंहारे तदन्त्याक्षरम् अनेकत्र लघु दृश्यते । लघुरूपमन्त्याक्षरं दीर्घीकर्तुं शक्यमिति विधिः विषमपादेषु न प्रयुक्तो दृश्यते। माघश्रीहर्षदयोऽपि अस्मिन् विषये श्रद्धधानाः आसन् इति तत्तत् काव्य- परिचयेन सिद्धं भवति । ऋतुसंहारे तु -

'तटविटपलताग्रालिङ्गनव्याकुलेन
दिशि दिशि परिदग्धा भूमयः पावकेन''

अत्र व्याकुलेन इत्येतत् व्याकुलेना इति दीर्घोच्चारणं शास्त्रसम्मतमपि महाकविप्रयोगविरुद्धमेव ।

''गुरुतरकुचयुग्मं श्रोणिबिम्बं तथैव
न भवति किमिदानीं योषितां मन्मथाय ।''

अस्मिन् प्रथमपादे ''तथैवा।'' पि तथैव ।

''त्यजति गुरुनितम्बा निम्ननाभिः सुमध्या
उर्षसि शयनमन्या कामिनी चारुशोभा ।''

अत्र सुमध्या उषसि इत्येवं सन्धिरहितप्रयोगोऽपि महाकविप्रयोगेषु न दृश्यते।

तथैव प्र ह्र इत्यादि रेफसंयुक्ताक्षराणि अत्र काव्ये केवलाक्षरसदृशानि परिगण्यन्ते । इदमपि एतत् काव्यं न कालिदासीयमित्यस्य निदर्शनं भवति। कालिदासेन न कुत्रापि एवं प्रयुक्तम् । ऋतुसंहारे तु

"विलोक्य नूनं भृशमुत्सुकश्चिरम्
निशाक्षये याति ह्रियेव पाण्डुताम्" ।

अस्मिन् 'याति ह्रियेव' इत्ययं प्रयोगः कालिदासीयो न स्यात् ।

"झटिति प्रविश गेहं मा बहिस्तिष्ठ कान्ते"

"दारिद्र्याद्ध्रियमेति ह्रीपरिगतः प्रभ्रश्यते तेजसः"

इत्यादिषु दृश्यमानमसुखकरं लघूकरणं कालिदासेन न कुत्रापि प्रयुक्तमस्ति। वसन्तवर्णनावसरे

"सोऽयं वो विवरीवरीतु वितनुर्भद्रं वसन्तान्वितः"

इत्यादिशब्दशास्त्रप्रौढताप्रदर्शनबालिशत्वं कालिदासकृतिषु न दृश्यते ।

ऋतुसंहारे भावांशमधिकृत्य यदि समालोच्यते तर्हि इमम् अभिप्रायं दृढीकर्तुमनेकानि प्रकरणानि द्रष्टुं शक्यन्ते । इतरकृतिषु पदसन्निवेशे यादृशी पक्वता वश्यता मुष्टिमेयता च सन्ति ताः ऋतुसंहारे अतिविरला एव ।

मेघसंदेशः केवलभावनाकलितं किञ्चनकाव्यमस्ति । तत् काव्यं भारते आसेतुहिमाचलं सहृदयलोकानां कियन्मात्रमाकर्षकमासीत् इत्यस्य उदाहरणं विविधभारतीयभाषासु तस्य शताधिकान्यनुकरणानि अविर्बभूवुरित्येतदेव ।

कुमारसम्भवं बहुधा नवनवकल्पनासमाकलितं काव्यमेव । उपभोग-क्षमे वयसि लौकिकजीवितमुत्सृज्य आध्यात्मिकवैराग्यमङ्गीकुर्वाणः जनः अन्ते कियन्मात्रं विषयासक्तेः क्रीतदासो भूत्वा स्वकीयं स्थानमानगौरवादिकं विस्मृत्य जीवितं कश्मलीकरोति इत्यस्य प्रतीकात्मकमाविष्करणमेव तत् काव्यम् । सः प्रमेयः अष्टमसर्गेण स्पष्टीक्रियते । तत्रैव कालिदासकृतं कुमारसम्भवं पर्यवस्यति च ।

तदाप्रभृत्येव विमुक्तसङ्गः
पतिः पशूनामपरिग्रहोऽभूत् ।

इत्यत्र दृश्यमानं परमशिवस्य तत् वैराग्यमष्टमे सर्गे -

"शूलिनः करतलद्वयेन सा सन्निरुद्ध्य नयने हृतांशुका ।
तस्य पश्यति ललाटलोचने मोहयत्नविधुरा रहस्यभूत् ॥"

इत्यस्मिन् समये कुत्र गतम् ?

रघुवंशे कालिदासः कविकुलचक्रवर्तिपदमारोहति । मानुषिकमूल्येषु अचञ्चलो विश्वासः दिलीपस्य रघोः दशरथस्य च जीवितद्वारा अतिविचित्र-काव्यकलावैभवेन सह महाकविना आविष्क्रियते । श्रीरामात् प्रभृति तत् परम्परायां मानुषिकदौर्बल्यानि स्पष्टीभवन्ति । मतापित्रोः त्यागः आन्तरशुद्धिः सहनम् इत्यादय एव अनन्तरपरम्पराणां सर्वतोमुखाभिवृत्तेः निदानम्, यदा धार्मिकमूल्येभ्यः व्यतिचलति तदा वंश एव नाशोन्मुखः संजायते, इत्यादिकं मौलिकं तत्त्वं रघुवंशस्य शिरासु आनखशिखं प्रसृत-मनुभूयते ।

> "स त्वं मदीयेन शरीरवृत्तिं
> देहेन निर्वर्तयितुं प्रसीद ।
> दिनावसानोत्सुकबालवत्सा
> विसृज्यतां धेनुरियं महर्षेः ।।"

इत्युत्तरेण तस्याम् अग्निपरीक्षायां प्रथमश्रेण्यां विजयीभूतस्य दिलीपस्य धर्मस्थैर्यमेव तस्य वंशस्य वास्तुशिलां दृढीकरोति ।

> "गुर्वर्थमर्थी श्रुतपारदृश्वा
> रघोः सकाशादनवाप्तकामः ।
> गतो वदान्यान्तरमित्ययं मे
> मा भूत् परीवादनवावतारः ।।"

इत्यस्मिन् पद्ये प्रतिबिम्बमानः रघुः पित्रोः तपस्यायाः मूर्तीभाव एवेति स्पष्टमेव । राजधर्मस्य परिपूर्णता रघौ एव अस्माभिः दृश्यते । रघोरनन्तरपरम्परासु एकैकस्मिन्नपि मानुषिकमूल्यानि प्रायः क्षीयमाणानि दृश्यन्ते । वस्तुतः काव्यकथाधारायाः क्षतं विनैव सचेतनाः भावनाः, लोकपरिचयः, अनुभवपक्वता, आध्यात्मिकता, तत्त्वोपदेशः, इत्यादयः तस्मिन् काव्ये कलारसिकतायाः मधुगुलं संकलय्य क्षीरनीरन्यायेन आविष्कृताः सन्ति ।

> "मरणं प्रकृतिश्शरीरिणाम्
> विकृतिर्जीवितमुच्यते बुधैः ।
> क्षणमप्यवतिष्ठते श्वसन्
> ननु जन्तुः किल लाभवानसौ ।।"

इत्येतत् पद्यं निराशतायाः अगाधतले निपतितस्य सर्वस्यापि हृदये शुभाप्तिविश्वासस्य प्रकाशनालं प्रज्वाल्य तम् कर्मोन्मुखं करोति ।

कालिदासस्य दृश्यकाव्यनानां रङ्गाविष्करणयोग्यतायाः अधिकं पठनास्वादनयोग्यतैव अस्ति । नाटकीयतायाः अधिकं काव्यात्मकत्वं तेषां अस्तीति सुवचम् । कालिदासस्य नाटकरचनाविषये मृच्छकटिककर्तुः प्रामाण्यं नास्ति । संक्षेपतः कालिदासस्य नाटकत्रयं नाटककाव्यमेव । नाटकरचनायां स महाकविः प्रथमस्थानं नार्हति इति सत्यमेव । साधारण-जीवितवैविध्यं प्रतिनिधातुं शूद्रक इव स कृतहस्तो नास्ति । तथापि आविष्कृत-कथापात्राणां स्वभावचित्रीकरणे एतावान् निपुणः संस्कृतसाहित्ये नास्ति इति निःसंशयं वक्तुं शक्यते । कण्वः, शकुन्तला, पार्वती इत्यादीनि पात्राणि अस्य उत्तमोदाहरणमेव ।

आकर्षक दृश्य वर्णित किया है । कहा गया है-

आमोदयन्ती कुमुदोत्पलानि प्रगल्भयन्ती कुररीकुलानि,
वाचालयन्ती चलचञ्चरीकान् शोशुभ्यमाना शरदभ्युपेता।
वामेक्षणाः केलिकलाविदग्धा विवृद्धमानाश्च विरज्यमानाः
जाड्येन्द्र जालैःअनुकूलयन्ती दूतीव दक्षा शरदागतैषा ।।

अर्थात् श्वेत कमलों को सुगन्धित एवं आनन्दित करती हुई, कुररी पक्षियों को वेचैन करती, चञ्चल भँवरों को बोलने में चतुर करती, केलिक्रीडा में निपुण, बढ़े हुए सम्मान युक्त, रोष युक्त सुन्दर नेत्रों वाली को शीत ऋतु के प्रभाव से अनुकूल करती, कुट्टनी समान चतुर ऋतु का आगमन हो गया है कहने का भाव यह है कि इस ऋतु ने सभी को प्रभावित किये बिना नहीं छोड़ा ।

उपयुक्त वर्णनों के अतिरिक्त अनेक ग्रन्थरत्नों में शीत ऋतु के रमणीय दृश्य प्रस्तुत किये गये हैं । रामायण आदि उपजीव्य ग्रन्थों में इस ऋतु का विशेष उल्लेख मिलता है । यहाँ पर पत्र की अत्यधिक वृद्धि को ध्यान में रखते हुए कतिपय महत्त्वपूर्ण वर्णनों का ही उल्लेख किया गया है। समस्त वर्णनों का अध्ययन करने के उपरान्त कहा जा सकता है कि शरद् ऋतु का ऋतु चक्र में अपना महत्त्वपूर्ण स्थान है तथा इस ऋतु को संस्कृत वाङ्मय में भी महत्त्वपूर्ण स्थान प्राप्त हुआ है ।

# मंथाचलः किमर्थकोऽस्ति ?

डॉ0 महाश्वेता चतुर्वेदी

सहृदयाः साहित्यसरोविहारिणो राजहंसा बुधावतंसाः

सृष्टिकालादद्यपर्यन्तं विचारसंचारप्रचारचारुरयं संसारसागरः सदा मथ्यते विलोड्यते चेति प्रतिपदं प्रतिक्षणमयं परिवृत्तिपरीवाहो न कदापि रोद्धुं शक्यः। एष एव संसृतिः संसारेति पदवीं दधानः।

मंथाचलस्य कथा पुराणेषु विद्यते यस्याम् सुरासुराः समुद्रमंथने निमग्नाः दृश्यन्ते। सुरजनाः अनन्तरं अमृतं प्राप्नुवन्ति। मेरुनामा एकः पर्वतः पुराणेषु वर्णितोऽस्ति; तस्य समीपे सूर्यविभाऽपि निष्प्रतिभा भासते। रत्नजटितासु शिखरमालिकासु देवाः एकत्रीभूय चिन्तयामासुः अमृत-प्राप्तिविषयेऽपि विचारविमर्श कृतवन्तः। नारायणेन कथितम् यत् देवासुरैः समुद्रमंथनम् करणीयम्। सुरगणाः मंथाचलम् प्राप्तुम् यत्नं कृतवन्तः परन्तु देवताः मंथाचलम् प्राप्तुम् असमर्थाः आसन्। विष्णुब्रह्मणोः समीपं गत्वा सम्बोधितवन्तः-''मंथाचलम् उत्खातुं उपायः कथ्यताम्''। सर्वम् श्रुत्वा ब्रह्मनारायणौ शेषनागं मंथाचलं उत्खातुं प्रेरितवन्तौ। आज्ञानुसारेण शेषनागः मंथाचलं उत्खातितवान्। तदनन्तरं मंथाचलेन सह सुराः समुद्रतटे गतवन्तः सागरं प्रति न्यवेदयन् ''वयम् सर्वे अमृतप्राप्त्यै भवतः मंथनम् करिष्यामः'' ''यदि भवन्तः अमृतविभाजने माम् स्मरिष्यन्ति, मंथाचलालोडने कष्टं अवश्यमेव सहिष्ये।'' सुराः स्वीकृतवन्तः, तदनन्तरम्-कच्छपराजम् प्रति कथितवन्तः-''भवान् अस्य पर्वतस्याधारो भवेत्।'' कच्छपः सर्वम् स्वीकृत्य मंथाचलम् पृष्ठे नियोजितवान्। मन्त्रेण मंथाचलम् इन्द्रः भ्रामयामास। मंथने असुराः वासुकिनागस्य मुखभागे, सुराश्च पुच्छभागे आसन्। पौनःपुन्येन कर्षणेन नागः मुखात् सधूमाग्निज्वालं श्वसितवान्। धूमश्वासाः किंचित् काल- पर्यन्ते मेघीभूय क्लान्तश्रान्तेभ्यः देवेभ्यः जलवर्षणं कृतवन्तः। पर्वत- शिखरेभ्यः जलवर्षणं सञ्जातम्।

समुद्रमंथने एतावान् कालो व्यतीतः परन्तु जलवर्षणं नाभवत् । ब्रह्मा विष्णुं प्रति निवेदितवान् "भगवन् ! एभ्यो बलं दीयताम्। भवान् तेषाम् एक एवाश्रयोऽस्ति ।" विष्णुना कथितम् "कार्यसंलग्न- जनेभ्यः बलं ददामि निरन्तरम् । सर्वे देवा शक्तिसम्पन्नाः भवेयुः, मंथाचलम्, भ्रामयित्वा समुद्रं क्षुब्धं कुर्युः ।" एतदनन्तरं देवासुराणाम् बलं संवर्धितम्। समुद्रः विक्षुब्धोऽभवत् ।

समुद्रात् प्रथमं शंशाङ्कः प्रकटितः, तदनन्तरं लक्ष्मीः,सुरा उच्चैःश्रवा नामा अश्वश्च प्रादुर्ब भूवुः । कौस्तुभमणिकल्पवृक्षकामधेन्वादिरत्नानि समुद्रात्प्रादुर्भूतानि । लक्ष्मीसुराचन्द्रादयस्तत्कालमाकाशमार्गेण देवलोकं गतवन्तः । दिव्यधन्वन्तरिम् तस्य करे च श्वेतकमंडलुं विलोक्य कोलाहलः संजातः। "ममेदम् ममेदम्" शब्दाः गुंजिता निखिले परिवेशे । ऐरावत- हस्तिनम् इन्द्रः प्राप्तवान् । कालकूटगरलमपि समुद्रादागतम् तत् शंकरः कंठे धृतवान् । तत्प्रभावेन 'नीलकंठः' इति नाम्ना प्रसिद्धिं प्राप्तवान्। सर्वम् दृष्ट्वा दानवाः निराशा आसन् । अमृतप्राप्त्यै तेषां मध्ये भेदभावना प्रसृताऽसीत् ।

तत्काले मोहिनीरूपे विष्णुः तेषां समीपे गतः, सर्वे मूढा मायास्वरूपं न ज्ञात्वा मोहिनीं प्रति अमृतपात्रम् समर्पितवन्तः । सर्वे देवाः अमृतपानं कृतवन्तः। राहुनामा दानवः छद्मदेवरूपेण अमृतपानमकरोत् । अमृतं तस्य कंठे गतम्, सूर्याचन्द्रमसौ सर्वम् रहस्यमुद्घाटितवन्तौ, शीघ्रमेव राहुः विष्णोः सुदर्शनचक्रेण प्रहृतः । राहोः शिरः गगने कर्कशस्वरमकरोत्। तस्मात् कालात् चन्द्रसूर्ययोः राहुणा साकं वैरम् स्थायिरूपेणास्ति । विष्णुना मोहिनीरूपं त्यक्त्वा ते आतंकिताः। सागरतटे देवासुरसंग्रामः संजातः। अस्मिन् युद्धे विष्णुः नरनारायणौ भूत्वा युद्धक्षेत्रे आसीत्। अन्ततः सुराः अमृतरक्षकाः आसन् ।

मंथाचलस्य पौराणिकी कथा व्याख्यामपेक्षते । उक्तं हि-

"व्याख्यागम्यमिदम् सर्वम् उत्सवः सुधियामलम् ।
हता दुर्मेधसश्चास्मिन् विद्वत्प्रियतया मया ।।"[१]

चतुर्दश समुद्ररत्नानि चतुर्दशविद्यानाम् प्रतीकरूपाणि । चतुर्दशविद्याश्चेमाः

| | |
|---|---|
| १- ब्रह्म | २- रसायनम् |
| ३- गानम् | ४- वेदः |
| ५- व्याकरणम् | ६- ज्योतिषम् |
| ६- जलतरः | ८- नटः |
| ८- धनुर्धरः | १०- कोषः |
| ११- राज्यप्रशासनम् | १२- चातुर्यम् |
| १३- अश्वारोहणम् | १४- संगीतम्[२] - |

नानार्थरत्नमालाकोशे प्रतीकस्य अनेकार्थाः वर्णिताः सन्ति :-

"प्रतीक्यते वा प्रतितीक्यते वा यश्च्छायिनोऽर्थान् परितो व्यनक्ति ।
प्रत्याप्यते वा विपुलार्थसृष्टिर्नानार्थवैविध्यधरं प्रतीकम् ।।[३]"

न केवलं मंथाचलः अपि तु संस्कृतवाङ्मये धातुविज्ञानस्य सर्वे शब्दाः प्रतीकात्मकाः सन्ति-

अ = अभावः,:अव्ययः, अखण्डः,

इ = गतिः, सामीप्यम्,

ए = गतिहीनता,

उ = उपरि, दूरे

ऋ = सत्यं, गतिः

लृ = शून्यता

ह = निश्चयः

क = बलवान्, सुखं,

ख = आकाशः, शून्यता

ग = गमनम्

घ = एकाग्रता

च = भिन्नः, अंगविहीनः

ज = नूतनत्वम्

ञ = नाशः

ट = निर्बलः, संकोचः

ठ = निश्चयः, प्रगल्भः

ड = क्रिया, अचेतनः, जडः

ढ = निश्चलः, चेतनः

त = तलभागः

थ = ऐश्वर्यम्

द = दानं, त्यागः

ध = धैर्यं, शक्तिः

प = पूर्णत्वम्

फ = विस्तारः

व = निवासः

भ = श्रद्धा

म = पालकत्वम्

य = योगः

र = ऋतम्

ष, स = परिपूर्णता[४]"

अनेन कारणेन भर्तृहरिमहोदयेन विचार्य कथितम्

"यस्मिंस्तूच्चरिते शब्दे यदा योऽर्थः प्रतीयते ।

तमाहुरर्थम् तस्यैव नान्यदर्थस्य लक्षणम् ।।"[५]

सर्वे वैदिकशब्दा अपि यौगिकाः सन्तिः । विज्ञातं हि समेषामपि विदुषाम् यद्वेदाः अस्माकं प्राणभूताः वर्तन्ते । वेदेषु यादृशं सूक्ष्मं प्रत्य- क्षाविषयीभूतं ज्ञानं वर्तते न तादृक् क्वचिदन्यत्रोपलभ्यते । उक्तं हि मनुना

''सैनापत्यं च राज्यं च दंडनेतृत्वमेव च ।

सर्वलोकाधिपत्यं च वेदशास्त्रविदर्हति ।।

भूतं भव्यं भविष्यं च सर्वं वेदात् प्रसिद्ध्यति ।

बिभर्ति सर्वभूतानि वेदशास्त्रं सनातनम् ।।

तस्मादेतत्परं मन्ये यज्जन्तोरस्य साधनम् ।

पितृदेवमनुष्याणां वेदश्चक्षुः सनातनम् ।

अशक्यमप्रमेयं च वेदशास्त्रमिति स्थितिः ।।

(मनुस्मृति १२/१००,९७,९९,९४)

संस्कृतसाहित्यस्यारम्भः ऋग्वेदात् भवति। पदार्थविज्ञानविषये वेदेषु महती दक्षता वर्तते । वेदेषु पुराणेषु च वर्णिता शब्दाः प्रतीकभूताः सन्ति, उक्तं हि पतंजलिना ''एकः शब्दः सम्यग् ज्ञातः सुप्रयुक्तः स्वर्गे लोके च कामधुग्भवति ।।[६]''

वेदेषु वर्णिताः शब्दाः मननीयाः सन्ति यथोक्तम्

''मन्त्रो मननात् छन्दांसि छादनात्[७]''

अत्र वर्णिताः नद्यः पर्वताः देशाश्च सर्वे प्रतीकम् उद्घाटयन्ति । यथोक्तं निरुक्तग्रन्थे-

''नद्यः कस्मात् ? नदना इमा भवन्ति शब्दवत्यः[८]''

''वाग्वै सरस्वती[९]''

''जिह्वा सरस्वती'' (शत० १२/९/१/१४)

''सरस्वती पुष्टिः'' (तैत्तिरीयब्राह्मणे २/४/७/४ )

''गंगा गमनात् । यमुना प्रयुतवती गच्छतीति वा'' ''

''इडा गंगेति विज्ञेया पिंगला यमुना नदी ।

मध्ये सरस्वती विद्यात् प्रयागादि समस्तथा ।।''

(शिवस्वरोदयः ३७४)

इह खलु इष्टानिष्टप्राप्तिपरिहारसमाकुले जगति मानवानां हिताय त्रिविधा शिक्षापद्धतिश्चलति । शिक्षा, दीक्षा समीक्षा चेति त्रिस्रो विधाः । शिक्षायाम् अक्षरबोधात् प्रभृति वेदज्ञानपर्यन्तम् यत् पठ्यते यल्लिख्यते

यद्घोष्यते तत् शिक्षायामेव अन्तर्भति। दीक्षा शिक्षापेक्षया समधिकतरप्रभावशालिनी । यथा हि प्राचीना श्रुतिरेषा :-

"सम्बन्धोऽयं प्रकीर्णोऽस्ति
शिक्षाया दीक्षया सह ।
दीक्षासीमा शिक्षा च
शाटिकेव सुशोभिता ।।"

यथा शाटिका कामं कौशेयनिर्मिता ऊर्णामयी कार्पासमयी वा स्यात् सीमन्तिनीं विना न शोभते तथैव केवला शिक्षा दीक्षां विना न शोभते । सर्वेषां शब्दानामर्थाः मननीयाः सन्ति ।। अथ का नाम काशी इति लिख्यते-

"काशीक्षेत्रं शरीरम् त्रिभुवनजननी व्यापिनी ज्ञानगंगा।
भक्तिश्रद्धा गयेयं निजगुरुचरणध्यानयोगः प्रयागः ।
विश्वेशोऽयं तुरीयः सकलजनमनःसाक्षिभूतान्तरात्मा
देहे सर्वं मदीये यदि वसति पुनस्तीर्थमन्यत् किमस्ति[१०] ।।"

एषा काशी ज्ञानगङ्गया समृद्धा सती शिक्षां धारयति, अथ च क्रियात्मिकां शक्तिं धारयन्ती दीक्षां धारयति, समीक्षणात् समीक्षा, समीक्षणम् किम् ?

सूक्ष्मतया कणेहत्य चिन्तनात् समीक्षा ।

पुराणेषु वर्णितः मंथाचलोऽपि प्रतीकभूतोऽस्ति । प्रतीकरूपेण देवासुराणां सागरमंथनम् ततश्च चतुर्दशरत्नसंघातसमवाप्तिः सर्वैरपि श्रुता स्यात् । वस्तुगत्या विचारपरम्परा कदापि समाप्तिं न याति। विचारसागरस्य मन्थनात् शुभाः कल्याणोत्तरा भावाः प्रादुर्भवन्ति । या हि बाष्पयानजलयानवायुयानादीनामाविष्कृतिः सेयं ज्ञानविज्ञानप्राप्तये सतत-चिंतनमननकरणादिव्यापृतानां सुविचारशक्तिशीलानां वैज्ञानिकानामुपल-ब्धिरेव ।

येषां प्रवृत्तिः सदान्वेषणपरा गवेषणाधियस्त एव सुधियः सुमेधसो मन्दराचलाः, नान्यः कोऽपि मंथाचलोऽस्ति :-

"मन्थनाद्गृह्यते ह्याज्यम् रसश्चैवेक्षुपीडनात् ।
मन्थाचलनिभा विज्ञास्तद्वदर्थान् विवृण्वते ।।"

उक्तं हि ऋग्वेदे :

"वाग्वै समुद्रो न वै वाक् क्षीयते न समुद्रः क्षीयते ।"

"माहेश्वराणि सूत्राणि वाक् समुद्रस्य मन्थनात् ।

प्रत्यहारविधात्रीयं सैषा रत्नचतुर्दशी ।।"

वाक्समुद्रस्य मन्थनाद् माहेन्द्रव्याकरणं त्रेतादियुगेषु वेदरूपज्ञान-सागरादर्थरत्नप्राप्तये समवाप्तम् आसीत् ।

वेदार्थज्ञानाय मंथाचलप्रवृत्तिरनिवार्या, वेदवेदांगज्ञो हि युक्ति-प्रमाणैरर्थज्ञानं कर्तुमर्हति :-

"वेदसागरसम्भूता रत्नज्योतिरुपेयुषी ।

अपारा चास्त्यनन्ता च साहस्री रत्नसंहतिः[११] ।।

स हि पौराणिकी समुद्रमंथनकथा प्रेरणाप्रदा प्रतीकसमन्विता च विद्यते, न सा सत्या मन्तव्या-

"देवाश्चैवासुराश्चैव भावमात्रा न व्यक्तयः ।।"

युक्त्या चैव प्रमाणैश्च विदाङ्कुर्वन्तु सज्जनाः ।।[१२]"

"ऊहापोहो विचाराणां श्रेयो दीक्षा तपो धृतिः ।

भौतिकश्च समुद्योगो देवासुरमयी कथा ।

मन्दरो मानसोद्योगो मन्थश्च श्रमसंविदा ।

मन्थाचलः समाख्यातः यो ह्यचलो दृढनिश्चयः ।।[१३]"

मुरारिकविर्देवभाषाया काव्यकर्मणि स्वीये अनर्घराघवे प्रत्याययति यत् संस्कृतभाषां समधीयमानानां सुमहती संख्या परं सुधियां सुमेधसामेव प्रगाढं गम्भीरमध्ययनं संभवति-नात्र कापि विप्रतिपत्तिरुपेया, स कथयतिः-

"दैवीं वाचमुपासते हि बहवः सारं तु सारस्वतम्

जानीते नितरामसौ गुरुकुलक्लिष्टो मुरारिः कवि ।।

अब्धिर्लंघित एव वानरभटैः किन्त्वस्य गंभीरताम्

आपातालनिमग्नपीवरतनुर्जानाति मन्थाचलः ।।"

वस्तुतः सुधा वामृतं वा नास्ति कश्चित् विषयो वस्तु वा क्रिया वा गुणो वा । तर्हि का नाम सा सुधा ? किं वामृतम् ? तदवधार्यताम् :-

"अधो सुधेयं परमार्थिनी परा

यया नु जीवोऽधिगतामृतो भवेत् ।

स्वयं सदा शुद्धविमुक्तभास्वरान्
परेशभक्त्यामृतमाप्नुयाज्जनः ।।''
''संसारसिन्धोर्मथनात् सहस्रशो
रत्नानि भूयांसि भवन्ति साञ्जसम् ।
परं परेशात् परमस्ति नात्र तत्
मन्थाचलेनैव जनेन लभ्यते ।।[१४]''
''मंथाचलः कोऽस्ति ? किमस्ति साधनम् ?
भक्तो ह्यसौ भक्तिरिहास्ति साधनम् ।
निरन्तरं वै यतमानमानसः
श्रमेण तत्त्वं तपसा नु विन्दति ।।''

(मन्दारमरन्दचम्पूः)

मन्दराचलैरिव समधीतवाङ्मयैस्सुधीभिः सुस्थिरैर्दृढैः परिवृढैरमृतस्वरूपोऽयमीश्वरः समाराधनीय इति मन्थाचलोऽयं योगी भक्तो वा गवेषणान्वेषणादिसाधनैर्मननश्रवणविचारदोहनैर्युक्तिप्रमाणमन्थनैः वा तदमृतमश्नुते :-

''आत्मानं चेद् विजानीयात् अयमस्मीति पूरुषः ।
स्वयं मंथाचलो भूत्वा दुग्धाद् घृतमिवोद्धरेत् ।।''

मानवः सारग्रहणं कुर्यात्, यथोक्तम्

''अनन्तपारं किल शब्दशास्त्रम्
स्वल्पं तथायुर्बहवश्च विघ्नाः ।
सारं ततो ग्राह्यमपास्य फल्गु
हंसैर्यथा क्षीरमिवाम्बुमध्यात् ।।[१६]

अयं मंथाचलः प्रतीकात्मकः, विद्वद्भिः विचारमंथनद्वारा ग्रहणीयोऽस्ति। ''नान्यः पन्थाः विद्यतेऽयनाय'' इति भावनया विरमामि ।

---

१. चन्द्रालोकः उद्भटः १।८

२. वेदशास्त्रतालिका, जियालाल वर्मा, पृ0 १०९

३. नानार्थरत्नमालाकोशः, अजयपालः, श्लोक २०

४. वैदिक सम्पत्तिः पं0 रघुनन्दन शर्मा, पृ. ३३६

५. वाक्यपदीयम्, ब्रह्मकांडे-३५ भर्तृहरिः

६. महाभाष्येः पतंजलि

७. निरुक्ते ७/१२ यास्कः

८. निरुक्ते २/२४ यास्कः

९. शतपथब्राह्मणे ५/१/३१

१०. शान्ति-पथ : शंकराचार्यः

११. सूक्तिसमुच्चयः पं0 रुद्रदेव शास्त्री

१२. सूक्तिसमुच्चयः पं0 रुद्रदेवशास्त्री

१३. सूक्तिसमुच्चयः रुद्रदेवशास्त्री

१४. मन्दारमरन्दचम्पूः ३/१२

१५. विवेक-विब्बोकः साधु-आश्रमः, होशियारपुरम्

१६. एकाक्षरीकोषः

# संस्कृत वाङ्मय में वैज्ञानिक तत्त्व

श्री राजनारायण प्रसाद मिश्र 'नूतन शास्त्री'

बीसवीं शताब्दी के लिए किये गये वैज्ञानिक आविष्कारों से प्रभावित होकर हम यह कहने और मानने लगे हैं कि आधुनिक युग वैज्ञानिक युग है परन्तु यह भी अविस्मरणीय है कि आज जो विज्ञान वृक्ष पल्लवित और सफलीभूत हो हमारे सामने विद्यमान है उसके बीज संस्कृत वाङ्मय के हृदय में आदि काल से सन्निहित रहे हैं और समय समय परमर्षिता अन्वेषिता एवं परिश्रमशीलता ने उन बीजों को अंकुरित और विकसित किया ।

विज्ञान कोई आधुनिक आविष्कार नहीं अपितु भारत का प्राचीनतम अनुसन्धेय विषय रहा है । आधुनिक विज्ञान भौतिकतावादी है,वह केवल प्रत्यक्ष को ही प्रमाणमभूत मानता है । अतः वह आत्म तत्त्व पर कोई अनुसंधान करने में सफल नहीं हो सकता । परन्तु भारतीय वैज्ञानिकों ने भौतिक विज्ञान से बहुत आगे बढ़कर आध्यात्मिक विज्ञान का अनुसन्धान अपने मस्तिष्क की प्रयोगशाला में किया । अतः प्रस्तुत निबन्ध के अन्तर्गत आधुनिक विज्ञान द्वारा प्रतिपादित तथ्यों को संस्कृत वाङ्मय के प्राचीनतमत्व में देखा जा रहा है ।

प्रथमतः यहाँ संस्कृत वाङ्मय के उस वैज्ञानिकत्व पर विचार व्यक्त किया जा रहा है जो व्यक्तिगत रूप में स्वयं उसी में अन्तर्निहित है ।

**१. ध्वनि-विज्ञान**

आधुनिक विज्ञान जिस ध्वनि के अन्तर्गत हम इग्लैंड और अमेरिका में दिये गये भाषण को तत्काल भारत में सुन लेते हैं उसका मौलिक सूत्र संस्कृत वाङ्मय के व्याकरण से आविर्भूत हुआ है । संस्कृत वाङ्मय की यह अद्वितीय वैज्ञानिकता है कि इसमें अ, क, च, प, श, आदि नाम केवल आकृतियों के ही नहीं अपितु उन ध्वनियों के नाम हैं जो उच्चारित होती हैं । यह अवैज्ञानिकता नहीं कि आकृति का नाम तो डब्लू और उच्चारण वकार है । ऐसा ही वैशिष्ट्य यहाँ एक यह भी है कि विभिन्न पदार्थों के अनेक नाम उनके गुणों की विवेचना करके रखे गये हैं । ध्वनियों का उक्त वर्णन करने के कारण अ, क, प, च, आदि को वर्ण कहा गया है तथा यह अनुसंधान करके कि उत्पन्न ध्वनि अविनाशी होती हैं वह अनन्त अन्तरिक्ष में सर्वतः

व्याप्त हो जाती है, भाषा-वैज्ञानिकों ने वर्ण का दूसरा नाम अक्षर रखा। व्याकरण में इस तथ्य क़ी विवेचना निम्न सूत्रों से की गई है।

१- वाग्व्याकृतिकृद् व्याकरणम्

२- शब्दसंप्रयोजना वाक्

३- साशयास्यजो ध्वनिः शब्दः

४- ततोऽन्यदपशब्दः

५-ध्वनीनामाकृत्युच्चारणयोर्नामानि वर्णाः

६- तेऽनन्तान्तरिक्षव्याप्तिमत्वेनाऽक्षयत्वादक्षराणि

-पाणिनीयपरिष्कृतिः (प्रकाशनाधीन)।

ध्वनि की इसी अविनाशिता के सिद्धान्त को यान्त्रिक रूप देकर महर्षि व्यासदेव ने दिव्य दृष्टि नामक यंत्र का निर्माण किया था जो संजय को इस उद्देश्य से दिया गया था कि वह हस्तिनापुर में बैठे-बैठे ही कुरुक्षेत्र में होने वाला सब दृश्य देखे तथा वार्तालाप भी सुने और धृतराष्ट्र को बतला दे। यहाँ यह कहना और मानना गलत है कि वह दिव्य दृष्टि कोई वैज्ञानिक यंत्र नहीं अपितु आध्यात्मिक शक्ति थी। यदि ऐसा होता तो वह स्वयं धृतराष्ट्र को ही दी गयी होती। धृतराष्ट्र नेत्रहीन थे। इस यंत्र का उपयोग नहीं कर सकते थे। अतः वह यंत्र धृतराष्ट्र को न देकर संजय को दिया गया।

**२. ज्ञात का अनन्ततत्त्व**

ज्ञान को चिरस्थायी बनाये रखने के लिए भाषा के अन्तर्गत लिपि का आविष्कार किया गया है। विश्व का प्राचीनतम लिखित ग्रन्थ ऋग्वेद इस तथ्य का अकाट्य प्रमाण है कि लिपि का आविष्कार सर्व प्रथम भारत में हुआ। लिपि के माध्यम से आज हम हजारों वर्ष पूर्व में होने वाली घटनाओं और ज्ञान के तत्त्वों का अध्ययन करते हैं और भविष्य के लिए छोड़ जाते हैं। यह सब कार्य ब्रिपि के बल पर ही होता रहा है।

लिपि में निर्दिष्ट शब्दों का प्रयोग किया जाता है और वह शब्द ज्ञान प्रदान करते हैं। संस्कृत व्याकरण इतना विस्तृत और अगाध है कि उससे असंख्य एवं अपरिमेय सार्थक शब्दों का निर्माण किया जा सकता है। यहाँ शब्द असंख्य और अनन्त हैं अतः उनसे प्राप्त ज्ञान भी अपरिमेय और अनंत है।

**३. सृष्टि-विज्ञान**

पदार्थ के अस्तित्व और उसके वैशिष्ट्यों पर विचार करना विज्ञान का प्रमुख कार्य है। संस्कृत वाङ्मय में अपनी वर्णमाला के अन्तर्गत अपना वैज्ञानिक अस्तित्व निर्धारित करने के बाद विश्व सृष्टि का अनुसंधान सर्वप्रथम विश्व के समक्ष विश्व के प्राचीनतम लिखित ग्रन्थ ऋग्वेद के माध्यम से, प्रस्तुत किया तद् यथा -

नासदासीन्नो सदासीत्तदानीमासीद् रजः नो व्योमापरो यत् ।
किमावरीवः कुहकस्य शर्मन् अम्भः किमासीद्गहनं गभीरम् ।

(ऋग्वेद, नासदीयसूक्त२४/३९)

अर्थात् उस समय सृष्टि उत्पत्ति से पहले असत् अभावात्मक तत्त्व नहीं था और सत्तात्मक तत्त्व भी नहीं था । रजः अर्थात् पृथ्वी आदि का कोई भी लोक नहीं था । अन्तरिक्ष नहीं था और अन्तरिक्ष से परे कुछ नहीं था । आवरक तत्त्व क्या था और किसकी संरक्षता में था । और उस समय दुष्प्रवेश्य अत्यन्त गहरा जल कहाँ था? अर्थात् यह सब कुछ भी नही था ।

तत्पश्चात् सृष्टि का आरम्भ तथा विकास देखिये । **आकाशाद् वायुर्वायोरग्नि-रग्नेरापोऽद्भ्यः पृथ्वी ।**

आकाश में स्पन्दन होकर वायु उत्पन्न हुआ, वायु से अग्नि, अग्नि से जल और जल से पृथ्वी आविर्भूत हुई ।

जब तक आधुनिक विज्ञान ने पता नहीं लगाया कि जल दो गैसों हाइड्रोजन तथा आक्सीजन का यौगिक रूप है, तब तक यह समझा जाता रहा कि संस्कृत वाङ्मय में जो अग्नि से जल की उत्पत्ति कही गयी है, वह असम्भव है । परन्तु संस्कृत वाङ्मय का अनुसंधान सर्वथा वैज्ञानिक था, क्योंकि हाइड्रोजन ज्वलनशील गैस है और आक्सीजन के बिना भी अग्नि प्रज्वलित नहीं हो सकती है । अतः अग्नि के मूलभूत तत्त्व का अनुसंधान कर यह उचित निर्धारित किया गया था कि जल की उत्पत्ति अग्नि से हुई ।

इसी प्रसंग में आधुनिक वैज्ञानिकों की मान्यता है कि पृथ्वी सूर्य का एक टुकड़ा है और आदि काल में सूर्य के समान अग्निरूप था । धीरे धीरे शीतलता को धारण कर वर्तमान रूप में पृथ्वी परिवर्तित हुई है । यहाँ भी संस्कृत वाङ्मय की यह मान्यता सिद्ध होती है कि जल से पृथ्वी आविर्भूत हुई, उस अग्नि रूप पृथ्वी के ऊपर दीर्घ काल तक जल की वर्षा हुई होगी और पृथ्वी का यह वर्तमान रूप प्रकट हुआ।

### ४. चैतन्य- विज्ञान

चराचर सृष्टि में पार्थिव शरीर के अतिरिक्त उनमें व्याप्त वह अलौकिक तत्त्व क्या है जिसकी विद्यमानता में वह पार्थिव शरीर सक्रिय या जीवित कहा जाता है ? इस प्रश्न का सर्वप्रथम जिन महावैज्ञानिक ने अनुसंधान किया उनका परिचय केवल संस्कत वाङ्मय विश्व के समक्ष प्रस्तुत कर रहा है । तत्कालीन वैज्ञानिकों ने देखा, परीक्षा की और निश्चित किया कि समस्त पार्थिव चराचर को चैतन्य शक्ति सूर्य से ही प्राप्त होती है । अतः उन्होंने घोषित कर दिया, **सूर्य आत्मा**[४] **जगतस्तस्थुषश्च,** (-ऋग्वेद/ सूर्यसूक्त १/११५,)

आधुनिक विज्ञान की मान्यता है कि यदि पृथ्वी को सूर्य का प्रकाश और उसकी उष्णता न प्राप्त हो तो यहाँ न तो कोई पेड़ पौधा उगे, न नदियों का जल प्रवाहित हो, समस्त सागर भी जम कर बर्फ हो जावे और सभी प्राणी निश्चेष्ट और निर्जीव हो जावें।

उक्त अनुसन्धान से और आगे बढ़कर वैदिक कालीन वैज्ञानिकों ने अपने मष्तिष्क की प्रयोगशाला में अनुसन्धान किया और इस परिणाम पर पहुँचे कि दृश्यमान सूर्य का भी आत्मा परमात्मा ब्रह्म है सूर्य तो उसका एक स्फुलिंग मात्र है और तबसे ऐसे ही नहीं, इससे भी अधिक प्रचंड तथा विशालकाय सूर्य अनन्त ब्रह्माण्ड में करोड़ों की संख्या में है। श्रीमद्भगवद्गीता कहती है कि भगवान् कृष्ण की कृपा से अर्जुन ने असंख्य सूर्यों को देखा। पाँच सहस्र वर्ष पूर्व कहे गये अर्जुन के उक्त वचन को मानने से आधुनिक वैज्ञानिक इन्कार नहीं कर सकते।

**५. सत्कार्यवाद**

वैज्ञानिक दृष्टिकोण से यह एक सर्वमान्य सिद्धान्त है कि कोई भी कार्य केवल, प्रकृति निर्दिष्ट साधन, उपादान या शक्ति से ही प्रादुर्भूत हो सकता है, अन्यथा नहीं। ऐसे ही अनेक तथ्य, संस्कृत वाङ्मय के सांख्यदर्शन से आविर्भूत हुए हैं यथा

असदकरणादुपादानग्रहणात्सर्वसम्भवाभावात् ।
शक्तस्य शक्यकरणात् कारणभावाच्च सत्कार्यम् ॥

अर्थात् असत्, (जिसकी विद्यमानता ही न हो वह) साधन नहीं हो सकता, जो कार्य जिससे बन सकता है केवल उसी उपादान को ग्रहण किया जाता है, सभी कार्य सर्वत्र असम्भव है, जिसमें जिस कार्य को करने की शक्ति हो केवल वही शक्ति उसी कार्य को कर सकती है तथा कारण की विद्यमानता है तो कार्य अवश्यम्भावी है।

उक्त शब्दों केमाध्यम से सांख्य दर्शन ने स्पष्ट किया है कि प्रत्येक कार्य अपने कारण में पहले से ही विद्यमान रहता है-अविद्यमान को आविर्भूत नहीं किया जा सकता यथा बालू में से तेल नहीं प्राप्त किया जा सकता। कान से देखा और नेत्र से सुना नहीं जा सकता आदि आदि।

**६. पदार्थ की अविनाशिता का सिद्धान्त**

आधुनिक विज्ञान ने अपने प्रयोगात्मक अनुसन्धान के द्वारा यह सिद्ध किया है कि पदार्थ मात्र अविनाशी है। उसका केवल रूपान्तरण किया जा सकता है, सर्वथा विनाश असम्भव है। पदार्थ का अस्तित्व किसी न किसी रूप में विद्यमान रहता ही है। उक्त तथ्य को संस्कृत वाङ्मय ने भगवान् कृष्ण के निम्न शब्दों में पाँच सहस्र वर्ष पूर्व ही प्रतिपादित कर दिया था :-

**नासतो विद्यते भावो नाभावो विद्यते सतः** (भगवद्गीता २/१६)

अर्थात् जो है ही नहीं उसकी विद्यमानता हो ही नहीं सकती, प्रकृति में कोई भी नया पदार्थ बनाया नहीं जा सकता, जो कुछ प्रकृति निर्मित है वही विद्यमान है। इसी प्रकार जो सत् अर्थात् विद्यमान है उसका कभी किसी भी प्रकार अभाव नहीं हो सकता, उसका विनाश किया ही नहीं जा सकता ।

### ७. गति-विज्ञान

अन्तरिक्ष यात्रा कोई नवीन या अभूतपूर्व कार्यवाही नहीं । संस्कृत वाङ्मय में अनेक कथानक ऐसे प्राप्त होते हैं जिससे सिद्ध है कि भारतीय वैज्ञानिक अन्तरिक्ष यात्रा करने के लिए यान बनाते थे । यह कहना अनुचित और असंगत न होगा कि उन्हीं कथानकों से प्रभावित होकर आधुनिक युग में अन्तरिक्ष यात्रा समझी गयी और वायुयान बने । पौराणिक कथानक के अनुसार विश्वामित्र ने अपने तपोबल से त्रिशंकु को दिव्य लोक भेजा परन्तु वह बीच में ही लटके रह गये। इस कथानक में सर्वप्रथम विचारणीय यह है कि तपस्या क्या चीज है, क्या अनशन करके शरीर को सुखाने का नाम तप है ? नहीं । किसी विशेष उद्देश्य से विशेष आग्रह और परिश्रम से कार्य करके सुख को त्याग कर कठिनाइयों को सहन करने का नाम तप है ।

वह कृषक जो शीत, उष्ण, वर्षा सब कुछ अपने सिर पर सहन करता हुआ खाद्योत्पादन करके समाज की सेवा में तत्पर रहता है, महान् तपस्वी है । वह जवान जो परिवार की ममता मोह छोड़ कर राष्ट्र की रक्षा के लिए प्रत्येक समय जीवन का बलिदान करने के लिए तत्पर रहता है, कितना त्यागी और तपस्वी है ! वह पुलिसमैन जो चौराहे पर एक पैर से ८ घंटे प्रत्येक ऋतु के प्रभाव को सिर पर सहन करता हुआ, जनता के यातायात का मार्ग सुरक्षित रखता है, क्या तपस्वी नहीं है?

अस्तु, विश्वामित्र ने कठोर अनुसंधान करके कोई राकेट जैसा यान बनाया और उस पर त्रिशंकु को स्वर्ग भेजा परन्तु जैसा कि आधुनिक वैज्ञानिक मानते हैं, अन्तरिक्ष में एक ऐसा स्थान है जहाँ पहुँचकर प्रत्येक पदार्थ वहीं स्थित हो जाता है, न तो ऊपर जा सकता है और न पृथ्वी पर वापस आ सकता है । त्रिशंकु का यान वहीं तक पहुँच कर उसी स्थान के भ्रम वायु में फँस गया । अब नहीं कहा जा सकता कि त्रिशंकु का वह यान इतने दीर्घ काल बाद किसी उल्कापात से नष्ट हो गया या अब भी उसका कोई अस्तित्व अन्तरिक्ष में है ।

इसी प्रकार दशरथ का रथ दश दिशाओं में अबाध गति से जाने तथा पुष्पक विमान आदि का वैज्ञानिकत्व हमारा संस्कृत वाङ्मय प्रस्तुत कर रहा है । और वह सब वर्णन यथार्थ है कवि कल्पना नहीं ।

### ८. अस्त्र-विज्ञान

आधुनिक विज्ञान ने परमाणु बम का आविष्कार किया है जो प्रायः महाभारत युग में प्रयुक्त अग्निबाण से मिलता जुलता ही है । परन्तु अभी तक वह जल बाण नही बनाया जा सका जो अग्निबाण (परमाणु बम) का विस्फोट होते ही उसी स्थान

पर घनघोर वर्षा करके बम के प्रभाव को तत्काल नष्ट कर दे । महाभारत युद्ध का वर्णन करते हुए हमारा संस्कृत वाङ्मय कहता है कि एक पक्ष के द्वारा अग्निबाण का प्रयोग किये जाने पर दूसरा पक्ष तत्काल जलबाण का प्रहार करता था जिससे घटाटोप बादल घिर कर इतनी तीव्र वर्षा करते थे कि शत्रु की सेना डूबने लगती थी तथा अग्निबाण का प्रहार करने वाला पक्ष वायु बाण का प्रहार कररके भयंकर आँधी तूफान उत्पन्न कर देता था जिससे बादल उड़ जाते थे ।

वह जलबाण और वायुबाण अभी आधुनिक वैज्ञानिक नहीं बना सके हैं । यहाँ प्रश्न उत्पन्न होता है कि वह वैज्ञानिक विद्या लुप्त कैसे हो गयी ? एक तो आचार्य द्रोण जैसे महावैज्ञानिक युद्ध में मारे गये, परशुराम ने क्षत्रिय योद्धा को विद्या न देने का प्रण कर लिया । दूसरे, महाभारत युद्ध के कुछ समय बाद बौद्ध धर्म ने अहिंसा का प्रबल प्रचार किया, अस्त्र निर्माण को हेय समझा जाने लगा । तीसरे सर्वाधिक आघात हमारे ज्ञान विज्ञान को विदेशी आक्रमणों ने पहुँचाया, असंख्य ग्रन्थों की होली जलाई गयी, नालन्दा जैसा विश्वविद्यालय भस्मसात् किया गया । तत्पश्चात् अंग्रेजों का आगमन हुआ, उन्होंने भारत के साथ और जो कुछ भी दुर्व्यवहार किये हों परन्तु हमारे साहित्य की उन्होंने रक्षा ही नहीं की अपितु उसे अपनाया भी । अस्तु, जो जितना संस्कृत वाङ्मय भारत में जीवित है वह अंग्रेजों के आगमन का सुपरिणाम है । भारत इस संबन्ध में अंग्रेजी शासन काल का सदैव आभारी रहेगा ।

### ९. परमाणु- विज्ञान

आधुनिक विज्ञान ने सिद्ध किया है कि परमाणु के विखण्डन से अपरिमित, शक्ति उत्पन्न हो जाती है । इस तथ्य का ज्ञान संस्कृत वाङ्मय के आयुर्वेदिक रस ग्रन्थों में स्पष्टतया प्राप्त हो रहा है । अभ्रक और लौह को पुनः ओषधियों के रस में घोट कर सहस्रशः अग्नि में पाक करने से उस भस्म के सूक्ष्म से सूक्ष्म परमाणु बनते जाते हैं और भस्म की शक्ति अत्यधिक मात्रा में बढ़ जाती है । अभ्रक और लौह को इसी आशय से सहस्रशः पुटित किया जाता रहा है कि उसके परमाणु विखण्डित होकर भस्म की शक्ति को बढ़ायें ।

### १०. रसायन विज्ञान

सर्वप्रथम भारत में संस्कृत वाङ्मय ने ही यह अनुसंधान और घोषणा की कि लौह आदि धातुएँ भी खाने के पदार्थ हैं शरीर को शक्ति स्फूर्ति तथा चिर दृढ़ता प्रदान करने के लिए उनका शरीर में विद्यमान होना परमावश्यक है । भारतीय रसायन विज्ञान ने ही अनुसंधान किया कि धातुओं में भी परस्पर शत्रुता और मित्रता होती है । स्वर्ण को गलाकर यदि उसमें सीसा (Lead) मिला दिया जावे तो स्वर्ण भस्म हो जाता है परन्तु यह भस्म शरीर के लिए अधिक हितकर नहीं होती। रस ग्रन्थ कहते हैं कि **'अरिलौहेन लौहस्य मारणम् दुर्गुणप्रदम्'** । श्वेत पारद और पीतवर्ण गन्धक को एकत्र घोटने से एक कृष्णवर्ण रासायनिक पदार्थ बन जाता है। यह अनुसंधान भी भारतीय रसायनशास्त्र की ही देन है ।

**११. वनस्पतियों का जीवन विज्ञान**

आधुनिक वैज्ञानिकों में भारतीय वैज्ञानिक श्रीजगदीश चन्द्र बोस का नाम विशेष उल्लेखनीय है । उन्होंने भारतीय परम्परा की इस मान्यता, कि वनस्पतियाँ भी सजीव प्राणी है, यन्त्र बनाकर विश्व के वैज्ञानिकों को प्रत्यक्ष दिखला दिया कि सभी वनस्पतियाँ हमारे समान ही खाने पीने श्वास लेने और सुख दुःख के अनुभव की क्रिया करती है । संस्कृत वाङ्मय कहता है कि हरे पेड़ पौधों को काटना पाप है; हिंसा है इसीलिए प्राचीन काल में समिधा (वृक्ष की स्वयं सूखी हुई टहनियाँ) विशेष महत्त्वपूर्ण एवं मूल्यवान समझी जाती थीं । प्राचीन गुरुकुल में विद्यार्थी यह समिधा ही प्रवेश शुल्क (एडमीशन फीस) लेकर आचार्य के समक्ष उपस्थित होता था यथा **समित्पाणिः श्रोत्रियम् ब्रह्मनिष्ठम्** इत्यादि । मानव सेवा के दृष्टिकोण से ओषधियों को उखाड़ते समय वे निम्न निवेदन करते थे-

येन त्वां खनते ब्रह्मा येन त्वां खनते हरि : ।
तेनाहं खनयिषयामि सर्वरोगहरो भव ।।

**काव्य और विज्ञान**

संस्कृत वाङ्मय कहता है कि हमारे कवि केवल कल्पना के ही अन्तरिक्ष में अपना काव्य पक्षी नहीं उड़ाते रहे हैं । उन्होंने वैज्ञानिक तथ्यों का भी पर्याप्त विवेचन किया है । महाकवि कालिदास ने पृथ्वी पर बैठे बैठे अनुसन्धान कर डाला कि अन्तरिक्ष में उड़ता हुआ मेघ धूम, ज्योति, सलिल और वायु का सम्मिलित योग है, यथा-

धूमज्योतिःसलिलमरुतां सन्निपातः क्व मेघः (पूर्वमे०७)

आज वैज्ञानिक जगत् में सर आईजेक न्यूटन महोदय का नाम अद्वितीय प्रतिष्ठा प्राप्त कर चुका है । उन्होंने प्रतिक्रिया और गुरुत्वाकर्षण का जो सिद्धान्त विश्व के समक्ष प्रस्तुत किया वह लगभग दो सहस्र वर्ष पूर्व हमारे महाकवि कालिदास और भारवि अपने काव्यों में स्पष्ट कर चुके थे । यही नहीं बल्कि उनका अनुसंधान न्यूटन महोदय के नियम से भी अधिक मान्य एवं महत्त्वपूर्ण है । न्यूटन महोदय का सिद्धान्त है कि प्रत्येक क्रिया विपरीत दिशा में उतने ही बल से जिसने बल से क्रिया की गयी हो प्रतिक्रिया हो जाती है । इसके विपरीत महाकवि कालिदास का सिद्धान्त है कि

क्रिया हि वस्तूपहिता प्रसीदति । (रघुवंश ३/२०)

अर्थात् जिस वस्तु के प्रति कोई क्रिया की जाती है, तदनुरूप ही क्रिया का प्रतिफल होता है । ऐसा नहीं कि जितने बल से क्रिया की गयी हो उतने ही बल से विपरीत प्रतिक्रिया हो ।

कालिदास के कथन को अधिक सार्थक और उसके समक्ष न्यूटन महोदय के सिद्धान्त को सदोष सिद्ध करने के लिए यहाँ मैं अपना प्रयोग प्रस्तुत कर रहा हूँ ।

एक छात्रा को ट्यूशन के रूप में गणित, संस्कृत, हिन्दी आदि पढ़ाने के लिए मैं और भौतिक तथा रसायन पढ़ाने के लिए साइन्स मास्टर साहब जाते थे । वह मुझसे बहुत अधिक स्वस्थ तथा नवयुवक और बलवान् थे और मैं सत्तर वर्ष का वृद्ध निर्बल व्यक्ति । छात्रा के अभिभावक ने मुझे विज्ञान के विषय में अल्पज्ञ समझकर उक्त साइंस मास्टर साहब को बुलाया था । मैंने एक दिन उनसे पूछा कि क्या आप मुझे बलपूर्वक अपनी ओर खींच सकते हैं ? उन्होंने अहंकार के साथ कहा, क्यों नहीं। मैने बाजी लगायी कि यदि आप मुझे खींच लें तो मैं आप को एक हजार रुपया दूँगा और न खींच सके तो आप मुझे दो हजार रुपया देंगे । मास्टर साहब सहमत हो गये । मैंने कहा, यहीं ला कर कल जमा कर देना, तब खींचकर देख लेना । उन्होंने कहा, ''आप भी जमा करेंगे'' मैंने उत्तर दिया कि मेरी ओर से तो न्यूटन महोदय देंगे क्योंकि उन्हीं के सिद्धान्त का कहना है कि आप जितना बल लगाकर मुझे अपनी ओर खींचेंगे उतने ही बल से मेरी ओर से आप के विपरीत प्रतिक्रिया हो जावेगी और आप मुझे नहीं खींच सकेंगे । परिणामतः अगले दिन उक्त साइंस मास्टर ने ट्यूशन के लिए आना बन्द कर दिया । गुरुत्वाकर्षण के सम्बन्ध में भारवि का कथन है-

प्रकर्षमाधारवशं गुणानाम्-

(किरातार्जुनीयम् ३/१८)

अर्थात् सभी गुणों का, केवल गुरुत्व का ही नहीं, आकर्षण उस गुण के आधार के वशीभूत होता है । आकाश में निराधार कोई पदार्थ स्थिर नहीं रह सकता, वह आधार चाहता है, अतः स्थिर होने के लिए वह अपने गुरुत्व की आधारभूत पृथ्वी की ओर खिंच आता है ।

इस प्रकार न्यूटन महोदय ने जो गुरुत्वाकर्षण का नियम निर्धारित किया वह कोई अभूतपूर्व या नवीन अनुसन्धान नहीं है; महाकवि भारवि उससे बहुत आगे हैं।

प्रस्तुत निबन्ध का विषय इतना विस्तृत है कि उसपर पूरा शोध प्रबन्ध लिखा जा सकता है । अतः स्थानाभाव से इस विषय को यहीं पर समाप्त किया जा रहा है।

# अतिद्वयी कथा

आचार्यः श्रीनिवासरथ

भट्टबाणस्य कादम्बरीकथामधिकृत्य किञ्चिदस्ति वक्तव्यम्। जानन्ति सर्वेऽपि भवन्तः यथायं भट्टबाणः वात्स्यायनवंशसम्भव इति। वंशेऽस्मिन् बाणपूर्वपूरुषः कश्चन कुबेरनामा बभूव। तनयस्तस्यार्थपतिर्नाम महाकवेर्बाणस्य पितामहः। तस्य सूनुश्चित्रभानुः। महात्मनश्चित्रभानोः सुतो बाण इति व्यजायत। सोऽयं बाणः स्थाण्वीश्वराधिपतेः श्रीहर्षस्य प्रीतिपात्रं बभूव निर्गत्य प्रीतिकूटात्। परमेश्वर- पार्श्ववर्ती प्रथमतः कथयांचक्रे हर्षचरितम्। हर्षचरितं नामाख्यायिका। आख्यायिकाम्भोधौ जिह्वाप्लवनचापलं कुर्वाणो बाणः, नृपतेर्भक्त्या अभीतो भीतो वा निर्वहणाकुल आसीत्। यतोऽयं स्वयं वक्ति-

> तथापि नृपतेर्भक्त्या भीतो निर्वहणाकुलः।
>
> करोम्याख्यायायिकाम्भोधौ जिह्वाप्लवनचापलम्।। इति

सत्यमेव नावापदसौ हर्षचरितनिर्वहणम्। अष्टम एवोच्छ्वासे विरराम बाणस्य वाणी। हर्षचरितं किं कृत्वा पूर्णतां न नीतम्? अत्र को हेतुः? अधुनातनेतिहासरचनाविचक्षणेषु पाश्चात्त्यसरणिशरणेषु वैदेशिकेषु भारतीयेषु च विदुषां समवायेषु हर्षसाम्राज्यपरिचयं प्रति बाण-विरचितं हर्षचरितमेवाङ्गीक्रियते परं प्रमाणमिति। आस्तां तावत्।

संस्कृत- साहित्यरसज्ञाः सबहुमानं स्मरन्ति बाणस्य कादम्बरीकथा-कारस्य। कादम्बरी कीर्तिमूलं बाणस्येति मन्ये न मनागपि प्रसरति कस्यापि सचेतसो विप्रतिपत्तिः। सेयं कथा मूलत एव भट्टबाणेनातिद्वयीति निरणायि। अत्रातिद्वयीति पदेन कमर्थमर्थतो निरूपयति बाणः इति समुदेति मे मनसि काचन विचिकित्सा। अत्र किंचनैकपदपरिवर्तनेन समं सम्वदतीव मे चेतः सुतेन बाणस्य। असौ तच्छेषमात्मवचसानुसन्धान आसीदहमप्यत्र तच्छब्दम्। तथा च-

> कादम्बरीरसभरेण समस्त एव मत्तो न किञ्चिदपि चेतयते जनोऽयम्।
>
> भीतोऽस्मि यन्न रसवर्णविवर्जितेन तच्छब्दमात्मवचसाप्यनुसन्दधानः।।

इति

इयं कथा अतिद्वयी। बाणानन्तरं प्रायशः समतीतेषु नवशतसम्मितेषु वर्षेषु शासति भारतभुवमकबरक्ष्मापतौ श्रीवाचको भानुचन्द्रः स्वकीयशिष्यस्य सिद्धचन्द्रस्य मनोमुदे रचयांचक्रे कादम्बरीवृत्तिम्। तत्र च ''अतिद्वतयीति विशेषणबलाद् बुद्धेरतितीक्ष्णत्वं फलितम्। द्वयीं बृहत्कथां वासवदत्तां चातिक्रान्तेत्यर्थः।'' इति व्याचष्टेऽतिद्वयीपदं भानुचन्द्रः। तन्न मे मनः प्रीणाति। दृश्यते चात्र कविसम्प्रदायविरोधः।

बाणः परिचिनोति बृहत्कथां वासवदत्तां च। स्मरति च तयोः सबहुमानम्। यथा च हर्षचरिते-

समुद्दीपितकन्दर्पा कृतगौरीप्रसाधना।
हरलीलेव नो कस्य विस्मयाय बृहत्कथा।।
कवीनामगमद्दर्पो नूनं वासवदत्तया।
शक्त्येव पाण्डुपुत्राणां गतया कर्णगोचरम्।।

इति श्लोकौ भवतः। तथा च तत्रैव-

कथमाख्यायिकाकारा न ते वन्द्याः कवीश्वराः।।

इति भट्टबाणः सुव्यक्तमेवाङ्गीकुरुते बृहत्कथा- वासवदत्ता-रचयित्रोर्विनया-वनतेन शिरसा वन्दनीयतां तद्रचनारसज्ञेन चेतसा सुतरामभिनन्दनीयतां च। कालिदास- सूक्तिषु प्रतिपदप्रीतिमता बाणेन 'प्रतिबध्नाति हि श्रेयः पूज्यपूजाव्यतिक्रम' इति न दृष्टं नाप्यवधारितमिति को नाम स्वीकुर्यादल्पधीर्विवेकशून्यः?

सर्वेऽप्यत्र विदुर्यथा पाणिनीयव्याकरणसम्प्रदाये यथोत्तरं मुनीनां प्रामाण्यमभ्युपगम्यते, तथापि कात्यायनः पाणिनिं पतञ्जलिश्च पाणिनिकात्यायनौ अतिक्रान्तमात्मानं नैवोद्घोषयतः। आस्तां तावत् सम्प्रदायः शास्त्राणाम्। अस्मिन्नतिविचित्रकविपरम्परावाहिनि संसारे नैव दृश्यते पुनरेकोऽपि कश्चन कविर्यः पूर्वकवीन् प्रति न निबध्नाति सविनयमादराञ्जलिम्। कविकुलगुरुः स्वयं कालिदास आत्मानं मन्दः कवियशःप्रार्थीति विनिवेद्य सबहुमानं स्मरति सूर्यप्रभवे वंशे कृतवाग्द्वाराणां पूर्वसूरीणाम्। अत एवातिद्वयीति पदेन बृहत्कथा- वासवदत्तयोर्लघूकरणं न भट्टबाणकल्पितमिति निश्चप्रचं पश्यति मे चेतः। मन्येऽत्र भवन्तोपि नान्यथा मन्यन्ते मदीयामिमां बाणवाणीपरीक्षणयुक्तिम्?

अथ बाणः इयमितिपदेन प्रारिप्सितायाः कादम्बरीकथायाः प्राक् गद्यबन्धनिबद्धं प्रबन्धद्वयं यदि नामारचयिष्यत् तर्हि नूनमतिद्वयीतिपदेन सम्भाव्येत तयोरुपसंख्यानम्। न च तत्तथा। परम्पराधिगतेषु तेषु तेषु बाणभणितिप्रशस्तिपरेषु श्लोकेषु हर्षाख्यायिकैवाद्वितीया गण्यते कादम्बरीसहोदरी। दरीदृश्यते च सुतरां तयोरेव गणना परतः प्रयुक्तेषु प्रशस्तिपद्येषु। कादम्बरी-हर्षचरितयोः फलतितरां किञ्चन रूपगतं साम्यम्। उभावपि मध्येप्रबन्धं विच्छेदविकलौ नापन्नौ पूर्णताम्। तत्र हर्षचरित-प्रस्तावनाकाल एवाख्यायिकायाः परिसमाप्तिं प्रति सन्दिहानेन बाणेन "भीतो निर्वहणाकुल" इति सुस्पष्टमेवोद्घोषितं नैजमात्मन्यप्रत्ययं चेतः। फलितं च तथैव। न विद्मो वयं तदसमाप्तिकारणं नापि भट्टबाणेन प्राकाश्यं नीतस्तत्र कश्चन हेतुः। कादम्बरीकथाप्रस्तावनापद्येषु हर्षचरित-रचनापरित्यागनिर्णयार्थसूचकः सबहुमानं प्रारिप्सितामाख्यायिकां प्रति बाणस्य वैरस्य हेतुः कश्चन स्फुटमेवावभासते। कथमिति चेत् सदसद्व्यक्तिविचक्षणानां भवतां क्षणमपि प्रार्थयेऽत्र दीयमानमवधानम्।

हर्षचरितरचनोपक्रमे भट्टबाणेनोपनिबद्धा एकविंशतिः श्लोकाः। तत्र च चरमे श्लोके बाणं प्रति प्रसादवतो हर्षस्य विद्योतते जयघोषः-

जयति ज्वलत्प्रतापज्वलनप्राकारकृतजगद्रक्षः।

सकलप्रणयिमनोरथसिद्धिश्रीपर्वतो हर्षः।। इति।

परस्ताच्च कादम्बरीकथोपक्रमपद्येषु न श्रूयते हर्षस्य नामापि। न केवलं न स्मरति हर्षस्य उत यं मौखरिं क्षत्रवर्माणं विशिनष्टि हर्षचरिते मूर्खपदेन तेनैव मौखरि- कुलेनाभ्यर्चितं गुरोर्भत्सोर्भर्वो वा चरणाम्बुजद्वयं प्रणमति बाणो वीतशङ्कः। न च न जानाति स्म बाणः मौखरीणां कृते मूर्खपदप्रयो-गावसरे निजगुरोस्तैः सह सम्बन्धसन्दर्भान्। अथ च निजप्रपितामहं कुबेरनामानं गुप्तनृपतिपूजितचरणत्वेन निर्दिशति बाणः। ततश्च कादम्बर्या उत्तरे भागे बाणतनयेन राज्ञा हर्षेण सह मनागपि नाश्लेषि जनयितुः सम्बन्धलेशोऽपि। यदि नाम बाणेन तृणाय मत्वा नृपाङ्गणरिङ्गणं नरपतिप्रसाददास्यान्नाधिगतं स्याद्बन्धनमोक्षसुखं तर्हि न युज्यते तनयस्य पुलीन्ध्रस्य हर्षनामस्मरणेऽवलम्बितं मौनम्। न केवलमसौ मौनमवलम्बते नृपसंश्रयप्रख्यापने प्रत्युत बहु मनुते गृहे गृहे लोकनमस्यतां जनकस्य।

कथयति च 'तातं यमर्चति गृहे गृह एव लोक' इति पितुर्लोकोत्तरसौभाग्यशालितामनितरसाधारणीम्।

सैषा स्थितिः सूक्ष्मेक्षिकया यथा यथा निपुणं परीक्ष्य निरीक्ष्यते तथा तथा सुस्पष्टमव-भासते कादम्बरी- हर्षचरितयोस्तादात्म्यम् । भगवद्गीतासूपनिषत्सु भगवदनुग्रहात् प्रत्यक्षीकृत्यात्मस्वरूपं यथाहाष्टादशेऽध्याये कौन्तेयोऽर्जुनः- ''नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाच्युत।'' इति तथैव राजपरिवेशरजोनिमीलितनयनो बाणः हर्षचरित- रचनाप्रपञ्चव्यामूढचेताः सन्नपि कदाचिदीश्वरेच्छया मोहभ्रंशवशादात्मनो हर्षस्य च प्रत्यक्षीचकार याथार्थ्यं परमार्थदृष्ट्या। हित्वा राजनि रागदृष्टिं विरराम हर्षचरितरचनानुबन्धप्रसङ्गात्। मूलतस्तामेवाख्यायिकां कादम्बरीकथारूपेण स्वच्छन्दमती रचयितुमारेभे।

प्रसङ्गेऽस्मिन् भारतीयेतिहाससङ्कलिता काचन वस्तुस्थितिर्भवति विवेचनीया। शक्यते सा स्थितिः प्रत्यक्षीकर्तुं भारतीय- विद्या- भवन- प्रकाशितेषु भारतीयेतिहासग्रन्थेषु। यावज्जीवनं हर्षस्यासीद्गौडेश्वरेण शशाङ्केन सह विग्रहः। राज्यवर्धननामा हर्षस्याग्रजस्तेनैव गौडेश्वरेण सकपटं घातित आसीदुज्जयिन्याम्। स गौडाधिपो बभूव बौद्धद्विट्। हर्षस्तु शैव-वैष्णवकापालिकादिप्रस्थानसहिष्णुः परमार्थतो बभूव सौगतानुगतः। चीन-देशीयः बौद्धेषु महायानप्रस्थानबद्धादरः ह्वेन्त्सांगनामा कश्चन यात्री हर्षस्य प्रीतिपात्रतां भेजे। उपकन्नौजनगरं तस्यैवाध्यक्ष्ये हर्षेण समायोजिताभूत् महता संरम्भेण धर्मसभा। स्थापिता तत्र विशाला सुवर्णप्रतिमा बुद्धस्य। राजाज्ञया ह्वेन्त्सांगाभिमतप्रस्थानविरोधिनस्तर्कानुपस्थापयितुं प्रतिबन्धिताः पञ्चशतसंख्याकाः सौगतेतरमतानुयायिनो विद्वान्सः राज्ञोऽनु-शासनमवधूय परित्यज्य सभां मण्डपान्निर्ययुः। परस्ताच्च कुतस्त्येनाग्निना कवलीकृतो बभूव भस्मसात् पटमण्डपः। देवोऽपि हर्षः कस्याप्यसुप्रणयिनो गूढपुरुषस्य निशितायुधप्रहारेण विक्षताङ्गः कथञ्चन रक्षितोऽभूद्दैवेन। राजरक्षिभिरन्विष्य धृतोऽसौ गूढपुरुषः साम्मुख्यमुपनीतो राज्ञः। सम्भाव्यत एवात्र नृपतेः सततपार्श्ववर्तिनो बाणस्य सभायां सौगतेतरमतप्रकाशनप्रतिरोधनिर्णयमुद्दिश्य हर्षेण साकं कश्चन मतभेदः। ततश्च सभाविघटनपटमण्डपदहनादिजन्यतमःप्रकर्षकलुषितात्मा सम्राट् कटुक्वणद्भिः खलैर्बाणं प्रत्यकारणाविष्कृतवैरदारुणीकृतोऽपि सम्भाव्यत

एव। राजरुषाक्रान्तस्य बाणस्यात्मरक्षायै राजकुलाद्धावकत्वाङ्गीकरणमपि न सम्भाव्यते न। बाणधावकयोः समानव्यक्तिवाचकत्वमधिकृत्य भासनाटक-चक्रोपस्कर्तुर्गणपतिशास्त्रिणः कश्चिदूहः प्राकरणिकत्वेनात्र जायते केवलं कौतुकविनोदनोपायरूपेणापि द्रष्टव्यः। भासनाटकभूमिका (Introduction to Bhasa's Plays) ग्रन्थे परिशिष्टांशत्वेन प्रकाशितो दृश्यतेऽयं सन्दर्भः-

> "वाणसंज्ञः कविरेव बाणशब्दशक्याशुगप्रसिद्धशीघ्रगामित्व-धर्मोपचारभङ्ग्या धावकशब्देन शीघ्रगामिवाचिना पुरा व्यपदिष्टः। तथा धावयति विद्रावयति प्रतिकवीन् इति, धावति काव्यनिर्माणसरणौ शीघ्रं गच्छतीति च व्युत्पत्त्या स धावको वक्तुमर्हः। तथा च प्रतिकविविद्रावकत्वं क्षिप्रकाव्यक्रियत्वम् आशुगवाचकबाणशब्द-बोध्यत्वमित्येतत्त्रितययोगिनं धर्मिणमेकं शक्तिलक्षणाभ्यां धावकशब्दः प्रतिपादयितुं समर्थ इति कृत्वा स बाणकवौ विदग्धैर्नूनं निवेशितः। न तु धावक इति बाणातिरिक्तः कश्चित् पुरुषविशेष आसीत्। एवं सति 'श्रीहर्षादेर्बाणादीनामिव धनम्' इति काश्मीरिकः पण्तीदुर्गाप्रसाददृष्टः काव्यप्रकाशपाठोऽपि 'धावकादीनामिव' इत्युपदर्शितपाठसमानार्थत्वात् स्वरसत उपपन्नो भवतीति।"

अत्र 'न तु धावक इति बाणातिरिक्तः कश्चित् पुरुषविशेष आसीदिति' महामहोपाध्यायानां गणपतिशास्त्रिणां मतेन सह सुतरां सम्वदतीव मे चेतः। प्राणरक्षानिमित्तं धावकत्वाश्रयणं बाणस्य लक्ष्यते सुतरां युक्तिसङ्गतो हेतुः। कटुक्वणनशीलैर्बाणविरोधिभिः तस्य धावकनाम्नोपलक्षणं सुव्यस्थितमिव प्रतीयते राजकुले। प्राणरक्षार्थं विन्ध्याटवीषु सततं धावतो बाणस्य राजकुलं प्रति मन्येऽजायत मोहभ्रंशः। ततश्च कदाचित् सत्त्वप्रतिष्ठेन मनसा विजित्य हर्षचरितरचनाभिनिवेशं विविच्य च परमार्थत आख्यायिकोपनिबद्धं वस्तुजातं हर्षेण सहात्मनः सम्बन्धसूत्राकलितं वृत्तं कादम्बरीकथारूपेणासूत्रयितुमारेभे।

भट्टबाणः स्वचरितमेव उच्छ्ँवासद्वयेनाचकथत् स्वकीये हर्षचरिते। कादम्बर्यामपि बाण आत्मानं पञ्जरस्थं शुकमिव पश्यति। शूद्रकसमक्षमुपस्थापितोऽयं कादम्बरीशुको बाणस्य चरितमनुहरति। यतोऽयं शुकः विदितसकलशास्त्रार्थः राजनीति-प्रयोगकुशलः पुराणेतिहासकथालापनिपुणः वेदिता गीतश्रुतीनां काव्यनाटकाख्यायिका-प्रभृतीनामपरिमितानां सुभाषितानामध्येता स्वयं च कर्ता परिहासालापपेशलः वीणा- वेणुमुरजादीनामसमः श्रोता नृत्तप्रयोग-

दर्शननिपुणः चित्रकर्मणि प्रवीणः द्यूतव्यापारे प्रगल्भः प्रयणकलहकुपितकामिनीप्रसादनोपायचतुरः गजतुरगपुरुषस्त्रीलक्षणाभिज्ञः सकलभूतलरत्नभूतो वैशम्पायनो नाम। परमेश्वरंपार्श्ववर्तीभूय स्थितेन बाणेन प्रसादसुभगो हर्षः सकलगुणानामाकर इवोपलक्षित आसीत्। आसीच्च गौडदेशाधीश्वरं शशाङ्कं प्रति तस्य मनसि शत्रुत्वभावः। शत्रुमित्रोदासीनवृत्त्या बाणः कादम्बर्यां तयोरेकरूपतां तत्त्वतः प्रत्यक्षीकुरुते। तत एव च हर्षचरितनायकः कादम्बर्यां त्रिधा विभक्तः। प्रकृते शशाङ्कमापीडयन्नास्ते स्म सर्वदा हर्षः। स एव हर्षः कादम्बर्यां चन्द्रापीडनाम्नोपन्यस्तः। पूर्वस्मिन् जन्मनि स एवास चन्द्रमाः इति प्रतिपादितं शशाङ्केन समं हर्षस्यैकरूपत्वम्। परतश्च तयोः शूद्रकरूपेणावस्थानम्। कादम्बरीरूपेण मददायिनी सुरैव तेषां सर्वावस्थासु समाराधनीया प्रेयसी सुतरां साधयति तेषामेकरूपत्वम्। आत्मपक्षे बाण एव वैशम्पायनः पुण्डरीकवन्निर्मलः शुकवत्पञ्जरस्थः। निखिलं तद्रूपकरहस्यं मातृरूपाया लक्ष्म्याः चाण्डालकन्यकारूपग्रहणेन सुस्पष्टतरं प्रकाशते कादम्बर्याम्। सैषा चाण्डालकन्यका लक्ष्मीः या विमुक्तात्मानं बाणं शुकवत् पञ्जरे निगृह्य शूद्रकसमक्षमुपनयति। वैशम्पायनरूपस्य बाणस्य प्रेयसी महाश्वेता निपुणमुपवर्णिता कादम्बर्यां सरस्वतीव नित्यशुद्धा सर्वशुक्ला च विदुषामाराध्या। सर्वमेतत् याथातथ्येनोपस्थापितं बाणेन कादम्बरीप्रस्तावनापद्येषु कादम्बरीकथां निरूपयतातिद्वयीति पदेन।

भट्टबाणेनात्मनो हर्षस्य च द्वयीमुद्दिश्योपक्रान्तासीदाख्यायिका हर्षचरिताभिधा। बाणहर्षवृत्तरूपौ अवयवौ यस्याः साख्यायिका हर्षचरिताभिधा द्वयी । तां हर्षस्यात्मनश्च द्वयीम् अतिक्रान्तेति कादम्बरीकथेयमतिद्वयी अत्र प्रादितत्पुरुषसमासः । ततश्च प्रस्तावनापद्येषु गुरोश्चरणाम्बुजानतिव्यतिकरानन्तरं स्मरति बाणः राजसपर्याशून्यस्य निजांध्रिद्वयस्य यतः गुरोश्चरणाम्बुजद्वयं सशेखरैर्मौखरिभिः कृतार्चनं राजते स्म। निरूपयति च स्वामवस्थां पद्यत्रयेण।

अकारणाविष्कृतवैरदारुणादसज्जनात्कस्य भयं न जायते।
विषं महाहेरिव यस्य दुर्वचः सुदुःसहं सन्निहितं सदा मुखे।।

कटु क्वणन्तो मलदायकाः खलास्तुदन्त्यलं बन्धनशृङ्खला इव।।

मनस्तु साधुध्वनिभिः पदे पदे हरन्ति सन्तो मणिनूपुरा इव।।

सुभाषितं हारि विशत्यधो गलान्न दुर्जनस्यार्करिपोरिवामृतम्।

तदेव धत्ते हृदयेन सज्जनो हरिर्महारत्नमिवातिनिर्मलम्।।

समुचितसन्दर्भविच्छिन्ना सैषा श्लोकत्रयी केवलं दुर्जननिन्दासज्जनस्तुतिरूपेणाप्राकरणिकत्वेन न पुष्णाति प्रस्तावना-पद्यानां सदर्थसङ्गतिश्रियम्। बाणहर्षद्वयीसम्बन्धेन पुनरियं श्लोकत्रयी शुकनासोपदेशसारतत्त्वमञ्जसा प्रस्तुवतीव भाति। अमुना श्लोकत्रयेण यत् किञ्चनानुभवसिद्धं प्रकटीकृतमास्ते भट्टबाणेन तदेव सर्वं शुकनासोपदेशव्याजेन विनिवेदितमास्ते चन्द्रापीडात्मने हर्षाय। शुकनासोपदेशवाक्यानि राजकुले सुखासीनस्य कस्यापि कवेः कल्पनाविलासविजृम्भितानीव नैव प्रतीयन्ते । तथा च-

"ग्रहैरिव गृह्यन्ते, भूतैरिवाभिभूयन्ते, मन्त्रैरिवावेश्यन्ते, सत्त्वैरिवा-वष्टभ्यन्ते, वायुनेव विडम्ब्यन्ते, पिशाचैरिव ग्रस्यन्ते, मदनशरैर्मर्माहता इव मुखभङ्गसहस्राणि कुर्वते, धनोष्मणा पच्यमाना इव विचेष्टन्ते, गाढप्रहाराहता इवाङ्गानि न धारयन्ति, कुलीरा इव तिर्यक् परिभ्रमन्ति, अधर्मभग्नगतयः पङ्गव इव परेण सञ्चार्यन्ते, मृषावादविषविपाक-सञ्जातमुखरोगा इवातिकृच्छ्रेण जल्पन्ति, सप्तच्छदतरव इव कुसुमरजोविकारैः पार्श्ववर्तिनां शिरःशूलमुत्पादयन्ति, आसन्नमृत्यव इव बन्धुजनमपि नाभिजानन्ति, उत्कम्पितलोचना इव तेजस्विनो नेक्षन्ते, कालदष्टा इव महामन्त्रैरपि न प्रतिबुध्यन्ते, जातुषाभरणानीव सोष्माणं न सहन्ते, दुष्टवारणा इव महामानस्तम्भनिश्चलीकृता अपि न गृह्णन्ति उपदेशम् , तृष्णाविषमूर्च्छिताः कनकमयमिव सर्वं पश्यन्ति, इषव इव पानवर्धिततैक्ष्ण्याः परप्रेरिता विनाशयन्ति, दूरस्थितान्यपि फलानीव दण्डविक्षेपैर्महाकुलानि शातयन्ति, अकालकुसुमप्रसवा इव मनोहराकृतयोऽपि लोकविनाशहेतवः, श्मशानाग्नय इवातिरौद्रभूतयः, तैमिरिका इवादूरदर्शिनः, उपसृष्टा इव क्षुद्राधिष्ठितभवनाः, श्रूयमाणा अपि प्रेतपटहा इवोद्वेजयन्ति, चिन्त्यमाना अपि महापातकाध्यवसाया इवोपद्रवमुपजनयन्ति, अनुदिवसमापूर्यमाणाः पापेनेवाध्मातमूर्तयो भवन्ति, तदवस्थाश्च व्यसनशतसंख्यतामुपगता वल्मीकतृणाग्रावस्थिता जलबिन्दव इव पतितमप्यात्मानं नावगच्छन्ति।.......... मिथ्यामाहात्म्यगर्वनिर्भराश्च न प्रणमन्ति देवताभ्यः, न पूजयन्ति द्विजातीन्, न मानयन्ति मान्यान्, नार्चयन्त्यर्चनीयान्, नाभिवादयन्त्यभिवादनार्हान्, नाभ्युत्तिठन्ति गुरून्, अनर्थकायासा-न्तरितोपभोगसुखमित्युपहसन्ति विद्वज्जनम्, जरावैक्लव्यप्रलपितमिति पश्यन्ति

वृद्धोपदेशम्, आत्मप्रज्ञापरिभव इति असूयन्ति सचिवोपदेशाय, कुप्यन्ति हितवादिने।''

सन्त्येवात्र स्वानुभूतानि याथार्थ्यप्रकाशकानि पदानि शुकनासमुखविन्यस्तानि तत्त्वतः प्रत्यभिज्ञेयानि विपश्चिद्भिः।

कादम्बरी- प्रस्तावना- पद्येषु दशभिः श्लोकैः प्रस्तौति निजवंशवर्णनं बाणः। हर्षचरिते तदेव विस्तरेणोपात्तमासीत्। तथापि पुनस्तद्वर्णनव्याजेनात्मनः हर्षचरितरचनां प्रति मनोगतान् भावान् प्रकटीकुरुते। कादम्बर्यां द्विजरूपेण निजावस्थानं वा सूचयति।

सरस्वतीपाणिसरोजसम्पुटप्रमृष्टहोमश्रमशीकराम्भसः।

यशोंशुशुक्लीकृतसप्तविष्टपात्ततः सुतो बाण इति व्यजायत।।

इत्यस्मात्परं बाणेनेति पदं परिहृत्य द्विजेनेति पदेन प्रारभते निजावस्थासूचकं पद्यम्। हर्षचरितरचनासमये तस्य कण्ठकौण्ठ्यपरिहारो नाभवत्। तस्य बुद्धिरपि महामनोमोहमलीमसान्धैवासीत्। हर्षचरितं रचयता तेन वैदग्ध्यविलासोऽपि नैवाधिगतः। यतः साख्यायिका द्वयीपरतन्त्रा भवति स्म। अस्ति कश्चनात्रास्मद्विरचितः श्लोकः।

बाणः कुण्ठितकण्ठ एव चरितं हर्षस्य वक्तुं क्रमा-

दारेभे न तथाप्यवापदुचितां वैदग्ध्यभङ्गीश्रियम्।

सोऽयं मोहमलीमसान्धितधिया प्रस्तौति कादम्बरीं

ब्रूते नूनमतिद्वयीमिति कथां तामेव कस्मात्स्वयम्।।इति

यदि नाम कश्चन कविः स्वकीयरचनां प्रति कदापि दैवदुर्विपाकादनुशयार्द्रो भवति तदा कीदृशी जायते तस्यावस्था किंरूपा च सा यातना इति ऋते बाणान्न कोऽपि वक्तुं समर्थ इति मन्ये। प्रतिपदं करुणरसार्द्रोऽयं चरमः प्रस्तावनाश्लोकः।

''द्विजेन तेनाक्षतकण्ठकौण्ठ्यया महामनोमोहमलीमसान्धया।

अलब्धवैदग्ध्यविलासमुग्धया धिया निबद्धेयमतिद्वयी कथा।। ''

अनेनैव श्लोकेन हर्षचरितस्य पूर्णतां प्रति रचयितुरेवारुचिबीजं सुव्यक्तमेव प्रकाशतां नीतम्। तदेव प्रमाणीक्रियते बाणतनयेन पुलिन्ध्रेण। कादम्बरीकथामसमाप्यैव दिवं गतस्य पितुर्वियोगेन दुःखदग्धः सुतो बाणस्य

सुदुर्घटकथापरिशेषसिद्ध्यै सृष्टेर्गुरू गिरिसुतापरमेश्वरौ वन्दते। नृसिंहरूपं नारायणं नमस्कृत्य पितृपादयोरानतः सन् कथापरिसमाप्त्यै यतते। कथयति च-

याते दिवं पितरि तद्वचसैव सार्धं
विच्छेदमाप भुवि यस्तु कथाप्रबन्धः।
दुःखं सतां तदसमाप्तिकृतं विलोक्य
प्रारब्ध एव च मया न 'कवित्वदर्पात्।। इति

अत्र कश्चिदूहः। बाणतनयः पितुर्वचसा सार्धं कथाप्रबन्धो विच्छिन्न इति सूचयति। प्रतिगृहं लोकपूजितस्य बाणस्य कादम्बरीकथा रचनाकालेऽपि सतामादरभाजनं बभूवेति फलितोऽर्थः। तत एव तदसमाप्तिकृता विपद्दुःखाकुरुते स्म मनांसि सताम्। तत्र भट्टबाणः कथामिमां लिखति स्म लिखितं सतां समक्षं वाचयति स्म उत वा सज्जनगोष्ठीसु केवलं ब्रूते स्म। अत्र मन्ये केनापि हेतुनाऽसौ केवलं श्रव्यतया गदति स्म गद्यकथाम्। तत्सर्वम् पुनराकर्णयन् लेखबद्धं कुरुते स्म तनयोऽयं बाणस्य। परिलक्ष्यते चैषा स्थितिः कादम्बर्या उत्तरभागभाषापल्लवन-स्वरूपपर्यालोचनेनापि। अथ सोऽयं बाणसूनुः कादम्बरीकथा-प्रबन्धविच्छेदसन्तप्तः परितो विकीर्णान् कथातन्तून् यदि नाम योजयितुं समर्थ आसीत् तदा कुतस्तेन न पूर्णतां नीता हर्षचरिताख्यायिका। निश्चप्रचं जानीते स्मासौ हर्षचरितं प्रति येन केनापि हेतुना विमुखीकृतान् पितुर्मनोभावान्। त एव मनोभावाः कादम्बरीप्रस्तावनायां चरमे पद्ये याथातथ्येनाकलिताः संलक्ष्यन्ते।

सूक्ष्मेक्षिकया हर्षचरितस्य प्रतिपदपर्यालोचनेन यथा वान्तःपङ्क्तिनिगूढार्थविवेचनेन न शक्यते न निर्णेतुं बाणस्य राजानं प्रति मोहभ्रंशसन्धिकालः। लक्ष्यते चासौ सन्धिकालः सप्तमे हर्षचरित-स्योच्छ्वासे। तत्र प्राग्ज्योतिषेश्वरेण कुमारेण प्रहितो हंसवेगनामा दूतः सन्देशेन हर्षं प्रति समायातस्तोरणद्वारम्। हंसवेगः कुमारप्रहितं त्रैलोक्याद्भुतं महच्छत्रं प्रदर्श्य राज्ञे उपायनीकुरुते। महातपत्रलाभहृष्टाय राज्ञे यथाक्रमं न्यवेदयत्कुमारसन्दिष्टम्। भूपालः परां कोटिमारोपिते प्रेम्णि लज्जमान इव सादरं जगाद- 'हंसवेग!........... तत्तथा यतेथाः यथा न

चिरमियमस्मान् क्लेशयति कुमारदर्शनोत्कण्ठा इति। अत्र क्रमप्राप्तं भवति-तदेवमभिनन्दितास्मदीयप्रणयो देवोऽपि दिवसैः कतिपयैरेव परागतः प्राग्ज्योतिषेश्वर इति करोतु चेतसि इत्युक्त्वा तूष्णीमभूत्। अचिराच्च नमस्कृत्य निर्जगाम इति,' न तु तत्तथा। अन्तरा प्रमत्तप्रलाप इव विनैव प्रकरणानुरोधं हंसवेगोदीरिता दास्यनिन्दा परुषपरुषैरुग्रैश्च वचोभिः प्रस्ताविता दृश्यते। राज्ञः समक्षं नैव शक्यते केनापि सन्देशहरेण तथा वक्तुम्। भृशं दृश्यतेऽत्रावधीरणादग्धस्य बाणस्यात्मविगर्हणमेव। तथा हि-''अपुण्यानां कर्मणामाचरणाद्धृतकस्य किं प्रायश्चित्तम्, का प्रतिपत्तिक्रिया, क्व गतस्य शान्तिः, कीदृशं जीवितम्, कः पुरुषाभिमानः, किं नामानो विलासाः,कीदृशी भोगश्रद्धा, प्रबलपङ्क इव सर्वमधस्तान्नयति दारुणो दासशब्दः। धिक् तदुच्छ्वसितमुपयातु निधनं धनम्..................नमो भगवद्भ्यस्तेभ्यः सुखेभ्यः तस्यायमञ्जलिरैश्वर्यस्य, तिष्ठतु दूर एव सा श्रीः शिवं स परिच्छदः करोतु यदर्थमुत्तमाङ्गं गां गमिष्यति...........वरं क्षणमपि कृता मानवता मानवता, न मतो नमतस्त्रैलोक्याधि राज्योपभोगोऽपि मनस्विनः'' इत्यादीनि वाक्यानि निवेदयन्त्येव बाणमनोगतार्थान्। अत्रैव छिन्नमिवोपलक्ष्यते बाणहर्षयोः सम्बन्धसूत्रम्। विरराम च लेखनी बाणस्य। अकारणाविष्कृतवैरदारुणस्य राज्ञः परिहरन् दर्शनं भीतभीतः प्राणरक्षायै विवेश विन्ध्याटवीम्। आट च तस्यामितश्चेतश्च सुबहून् दिवसान्। गच्छता कालेन शनैः शनैः प्रशान्ते च मन्युवेगे विन्ध्याटवीवर्णनं प्रति समाकृष्टहृदयः राजस्वसू राज्यश्रियः समुद्धारोदन्तपर्यन्तं हर्षचरितं चकर्ष। नीरजस्कतया चित्तवृत्तेः मोहभ्रंशजुषा दृशा सत्त्वोद्रेकप्रशान्तमनाः स्वस्य हर्षस्य चेति चरितद्वयीं कथारूपेण कादम्बरीति नाम्ना कथयितुमारेभे।

अथ बाणतनयेन नैव प्रकाशतां नीतं निजनाम। कैश्चनाधुनातनानुसन्धानकुशलैः समुद्घाटितं तस्य नाम भूषणभट्ट इति। तिलकमञ्जरीकारो धनपालः तं पुलिन्ध्राभिधं मनुते। पुलिन्ध्र इति विचित्रं नाम। पुलिन्ध्रनामानः सम्भवन्ति केचन विन्ध्याटवीवास्तव्या एव। हर्षचरितेऽपि हंसवेगमुखोपन्यस्तदास्यनिन्दाप्रसङ्गादनन्तरमेव दृश्यते भीषणाभोगरूक्षं सद्विद्वज्जनमनोहारि विन्ध्याटवीवर्णनम्। मन्ये हर्षरुषा भीतेन बाणेनाधिविन्ध्याटवि सुचिरमुषितं स्यात्। स्मारितोऽस्म्यत्र

सुभाषितस्य कस्यापि याथातथ्येनानुभूतस्य।

वरं पर्वतदुर्गेषु भ्रान्तं वनचरैः सह।

न मूर्खजनसंसर्गः सुरेन्द्रभवनेष्वपि।। इति

शवरपत्तनेषु सुचिरं कृताधिवासस्य बाणतनयस्य पुलिन्ध्र इति नाम न नामाश्चर्यपदम्। परं च रुणद्धि विचारस्वातन्त्र्यं राज्याश्रयश्रीः। लब्धास्पदोऽस्मीति विवादभीरुत्वं न वृणोति बाणचरितम्। भुक्तोज्झितराज्यश्रियातिशेते हर्षचरितं बाणः। सत्यमुद्घोषयति व्यक्तिविवेकव्याख्याने रुय्यकः-

हेम्नो भारशतानि वा मदमुचां वृन्दानि वा दन्तिनां

श्रीहर्षेण समर्पितानि कवये बाणाय कुत्राद्य तत्।

या बाणेन तु तस्य सूक्तिनिकरैरुट्टङ्किताः कीर्तय-

स्ताः कल्पप्रलयेऽपि यान्ति न मानङ्मन्ये परिम्लानताम्।।

।।इति शम्।।

# Sthāvaraka Ceṭa



**Dr. S.V. Sohoni**

1. Among the minor characters in the drama *Mṛcchaṭikam,* the *Rāṣṭriya's* domestic slave carrying the name थावलअ in his master's speech, deserves particular notice, for two main reasons-the first being the purpose for which this character was invented by *Śūdraka*, and the second being the regional implication of that name, which seem to have been missed.

2. As regards the first aspect. *Śūdraka* very clearly wanted to bring out how this domestic slave's career illustrates one of his basic conclusions about life viz the interplay of the fortunes of people at the hands of destiny. How and why थावलअ was recruited into the service or establishment of the *Rāṣṭriya* would be explained by dealing with the second point noted above. It is now sufficient to state that थावलअ had a conscience which he respected-and subject to that primary consideration governing his outlook, he strove to be as obedient a servant of that beastly master of his, as was possible. This is brought out emphatically in his conversation with the *Rāṣṭriya* in the course of the important incident in Act VII of the drama, leading to the *Rāṣṭriya* himself having to throttle *Vasantasenā.*

3. In Act X, 'थावलअ' tried to jump to the ground although he had been put into fetters, when he heard that it was *Cārudatta* who was being taken to the gallows for what was thought to be his crime of murdering *Vasantasenā*. He falls prostrate before *Cārudatta,* on finding that nobody believed with him that *Cārudatta* was innocent. He said "*Ajja Cārudatta, ettika me vibhava'* i.e. "Arya *Cārudatta etāvān me vibhavaḥ* (x.30). He deeply regrets that he could do nothing more to prove of help to *Cārudatta* in his abject plight.

4. While this much is pretty evident, the second aspect of the matter is not so clear. It all centres around the Sanskritised name 'Sthāvaraka.' I venture to submit that it's Sanskrit equivalent could also be *'Strāvaṇaka'*, which would disclose its regional background viz the area knoun as *Stravaṇi* or *Travaṇi.*

5. There are good grounds to hold that the *Rāṣṭriya* himself was a Gurjara. The Gurjaras had their capital at Bhinmal in western Rajasthan. That was the *'Kaṇṭakīdeša'*, associated with him,

